१०७ ॐ द्वापराय नमः।
१०८ ॐ परमोदाराय नमः।
१०९ ॐ परमाय नमः।
११० ॐ ब्रह्मचर्यवते नमः।
१११ ॐ उदीच्यवेशाय नमः।
११२ ॐ मुकुटिने नमः।
११३ ॐ पद्महस्ताय नमः।
११४ ॐ हिमांशुभृते नमः।
११५ ॐ सिताय नमः।
११६ ॐ प्रसन्नवदनाय नमः।
११७ ॐ पद्मोदरनिभाननाय नमः।
११८ ॐ सायं दिवा दिव्यवपुषे नमः।
११९ ॐ अनिर्देश्याय नमः।
१२० ॐ महालयाय नमः।
१२१ ॐ महारथाय नमः।
१२२ ॐ महते नमः।
१२३ ॐ ईशाय नमः।
१२४ ॐ शेषाय नमः।
१२५ ॐ सत्त्वरजस्तमसे नमः।
१२६ ॐ धृतातपत्रप्रतिमाय नमः।
१२७ ॐ विमर्षिणे नमः।
१२८ ॐ निर्णयाय नमः।
१२९ ॐ स्थिताय नमः।
१३० ॐ अहिंसकाय नमः।
१३१ ॐ शुद्धमतये नमः।
१३२ ॐ अद्वितीयाय नमः।
१३३ ॐ विवर्द्धनाय नमः।
१३४ ॐ सर्वदाय नमः।
१३५ ॐ धनदाय नमः।
१३६ ॐ मोक्षाय नमः।
१३७ ॐ विहारिणे नमः।
१३८ ॐ बहुदायकाय नमः।
१३९ ॐ चारुरात्रिहराय नमः।
१४० ॐ नाथाय नमः।
१४१ ॐ भगवते नमः।
१४२ ॐ सर्वगाय नमः।
१४३ ॐ अव्ययाय नमः।
१४४ ॐ मनोहरवपुषे नमः।
१४५ ॐ शुभ्राय नमः।
१४६ ॐ शोभनाय नमः।
१४७ ॐ सुप्रभावनाय नमः।
१४८ ॐ सुप्रभावाय नमः।
१४९ ॐ सुप्रतापाय नमः।
१५० ॐ सुनेत्राय नमः।
१५१ ॐ दिग्विदिक्पतये नमः।
१५२ ॐ राज्ञीप्रियाय नमः।
१५३ ॐ शब्दकराय नमः।
१५४ ॐ ग्रहेशाय नमः।
१५५ ॐ तिमिरापहाय नमः।
१५६ ॐ सैंहिकेयरिपवे नमः।
१५७ ॐ देवाय नमः।
१५८ ॐ वरदाय नमः।
१५९ ॐ वरनायकाय नमः।
१६० ॐ चतुर्भुजाय नमः।
१६१ ॐ महायोगिने नमः।
१६२ ॐ योगीश्वरपतये नमः।

९६३ ॐ अनादिरूपाय नमः।
९६४ ॐ अदितिजाय नमः।
९६५ ॐ रत्नकान्तये नमः।
९६६ ॐ प्रभामयाय नमः।
९६७ ॐ जगत्प्रदीपाय नमः।
९६८ ॐ विस्तीर्णाय नमः।
९६९ ॐ महाविस्तीर्णमण्डलाय नमः।
९७० ॐ एकचक्ररथाय नमः।
९७१ ॐ स्वर्णरथाय नमः।
९७२ ॐ स्वर्णशरीरधृजे नमः।
९७३ ॐ निरालम्बाय नमः।
९७४ ॐ गगनगाय नमः।
९७५ ॐ धर्मकर्मप्रभावकृते नमः।
९७६ ॐ धर्मात्मने नमः।
९७७ ॐ कर्मणां साक्षिणे नमः।
९७८ ॐ प्रत्यक्षाय नमः।
९७९ ॐ परमेश्वराय नमः।
९८० ॐ मेरुसेविने नमः।
९८१ ॐ सुमेधाविने नमः।
९८२ ॐ मेरुरक्षाकराय नमः।
९८३ ॐ महते नमः।
९८४ ॐ आधारभूताय नमः।
९८५ ॐ रतिमते नमः।
९८६ ॐ धनधान्यकृते नमः।
९८७ ॐ पापसन्तापहर्त्रे नमः।
९८८ ॐ मनोवाञ्छितदायकाय नमः।
९८९ ॐ रोगहर्त्रे नमः।
९९० ॐ राज्यदायिने नमः।
९९१ ॐ रमणीयगुणाय नमः।
९९२ ॐ अनृणिने नमः।
९९३ ॐ कालत्रयानन्तरूपाय नमः।
९९४ ॐ मुनिवृन्दनमस्कृताय नमः।
९९५ ॐ सन्ध्यारागकराय नमः।
९९६ ॐ सिद्धाय नमः।
९९७ ॐ सन्ध्यावन्दनवन्दिताय नमः।
९९८ ॐ साम्राज्यदाननिरताय नमः।
९९९ ॐ समाराधनतोषवते नमः।
१००० ॐ भक्तदुःखक्षयकराय नमः।
१००१ ॐ भवसागरतारकाय नमः।
१००२ ॐ भयापहर्त्रे नमः।
१००३ ॐ भगवते नमः।
१००४ ॐ अप्रमेयपराक्रमाय नमः।
१००५ ॐ मनुस्वामिने नमः।
१००६ ॐ मनुपतये नमः।
१००७ ॐ मान्याय नमः।
१००८ ॐ मन्वन्तराधिपाय नमः।

*॥ इति श्रीभविष्यपुराणे श्रीसूर्यसहस्रनामावलिः सम्पूर्णा ॥*

॥ श्रीरामाय नमः ॥

# श्रीरामसहस्रनामस्तोत्रम्

अस्य श्रीरामसहस्रनाममालामन्त्रस्य विनायक ऋषिः अनुष्टुप् छन्दः श्रीरामो देवता महाविष्णुरिति बीजं गुणभृन्निर्गुणो महानिति शक्तिः सच्चिदानन्दविग्रह इति कीलकं श्रीरामप्रीत्यर्थे जपे विनियोगः।

*न्यासः*

(क) **करन्यासः**—ॐ श्रीरामचन्द्राय अङ्गुष्ठाभ्यां नमः। ॐ श्रीसीतापतये तर्जनीभ्यां नमः। ॐ श्रीरघुनाथाय मध्यमाभ्यां नमः। ॐ श्रीभरताग्रजाय अनामिकाभ्यां नमः। ॐ श्रीदशरथात्मजाय कनिष्ठिकाभ्यां नमः। ॐ श्रीहनुमत्प्रभवे करतलकरपृष्ठाभ्यां नमः।

(ख) **हृदयादिन्यासः**—ॐ श्रीरामचन्द्राय हृदयाय नमः। ॐ श्रीसीतापतये शिरसे स्वाहा। ॐ श्रीरघुनाथाय शिखायै वषट्। ॐ श्रीभरताग्रजाय कवचाय हुम्। ॐ श्रीदशरथात्मजाय नेत्रत्रयाय वौषट्। ॐ श्रीहनुमत्प्रभवे अस्त्राय फट्।

*ध्यानम्*

**ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं**
**पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम्।**
**वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं**
**नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम्॥***

---

* जो धनुष-बाण धारण किये हुए हैं, बद्धपद्मासनसे विराजमान हैं, पीताम्बर पहने हुए हैं, जिनके प्रसन्न नयन नूतन कमलदलसे स्पर्धा करते तथा वामभागमें विराजमान श्रीसीताजीके मुखकमलसे मिले हुए हैं, उन आजानुबाहु, मेघश्याम, नाना प्रकारके अलंकारोंसे विभूषित तथा विशाल जटाजूटधारी श्रीरामचन्द्रजीका ध्यान करे।

नीलाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तीं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे॥*

स्तोत्रम्

राजीवलोचनः श्रीमान् श्रीरामो रघुपुङ्गवः।
रामभद्रः सदाचारो राजेन्द्रो जानकीपतिः॥ १ ॥
अग्रगण्यो वरेण्यश्च वरदः परमेश्वरः।
जनार्दनो जितामित्रः परार्थैकप्रयोजनः॥ २ ॥
विश्वामित्रप्रियो दान्तश्शत्रुजिच्छत्रुतापनः।
सर्वज्ञः सर्वदेवादिः शरण्यो वालिमर्दनः॥ ३ ॥
ज्ञानभाव्योऽपरिच्छेद्यो वाग्मी सत्यव्रतः शुचिः।
ज्ञानगम्यो दृढप्रज्ञः खरध्वंसी प्रतापवान्॥ ४ ॥
द्युतिमानात्मवान् वीरो जितक्रोधोऽरिमर्दनः।
विश्वरूपो विशालाक्षः प्रभुः परिवृढो दृढः॥ ५ ॥
ईशः खड्गधरः श्रीमान् कौसलेयोऽनसूयकः।
विपुलांसो महोरस्कः परमेष्ठी परायणः॥ ६ ॥
सत्यव्रतः सत्यसन्धो गुरुः परमधार्मिकः।
लोकज्ञो लोकवन्द्यश्च लोकात्मा लोककृत्परः॥ ७ ॥

* बायें करकमलको घुटनेपर रखकर दाहिनेसे ज्ञानमयी मुद्रा धारण किये, अविरत वीरासनसे विराजमान, श्यामल बादलके समान मञ्जुलकान्ति, मुकुट-अङ्गद आदि विविध वेश-भूषाविभूषित, देदीप्यमान, दिव्याङ्गधारी भगवान् राघवेन्द्र श्रीराम एवं उनके पार्श्वमें समासीन हो निर्निमेष नेत्रसे उन्हींको निहारती हुई बिजलीके समान द्युतिवाली, करकमलधारिणी, धरानन्दिनी भगवती श्रीसीताका हम भजन करते हैं।

अनादिर्भगवान् सेव्यो जितमायो रघूद्वहः।
रामो दयाकरो दक्षः सर्वज्ञः सर्वपावनः॥ ८ ॥
ब्रह्मण्यो नीतिमान् गोप्ता सर्वदेवमयो हरिः।
सुन्दरः पीतवासाश्च सूत्रकारः पुरातनः॥ ९ ॥
सौम्यो महर्षिः कोदण्डी सर्वज्ञः सर्वकोविदः।
कविः सुग्रीववरदः सर्वपुण्याधिकप्रदः॥ १०॥
भव्यो जितारिषड्वर्गो महोदरोऽघनाशनः।
सुकीर्तिरादिपुरुषः कान्तः पुण्यकृतागमः॥ ११॥
अकल्मषश्चतुर्बाहुः सर्वावासो दुरासदः।
स्मितभाषी निवृत्तात्मा स्मृतिमान् वीर्यवान् प्रभुः॥ १२॥
धीरो दान्तो घनश्यामः सर्वायुधविशारदः।
अध्यात्मयोगनिलयः सुमना लक्ष्मणाग्रजः॥ १३॥
सर्वतीर्थमयश्शूरः सर्वयज्ञफलप्रदः।
यज्ञस्वरूपी यज्ञेशो जरामरणवर्जितः॥ १४॥
वर्णाश्रमकरो वर्णी शत्रुजित् पुरुषोत्तमः।
विभीषणप्रतिष्ठाता परमात्मा परात्परः॥ १५॥
प्रमाणभूतो दुर्ज्ञेयः पूर्णः परपुरञ्जयः।
अनन्तदृष्टिरानन्दो धनुर्वेदो धनुर्धरः॥ १६॥
गुणाकरो गुणश्रेष्ठः सच्चिदानन्दविग्रहः।
अभिवन्द्यो महाकायो विश्वकर्मा विशारदः॥ १७॥
विनीतात्मा वीतरागस्तपस्वीशो जनेश्वरः।
कल्याणप्रकृतिः कल्पः सर्वेशः सर्वकामदः॥ १८॥

अक्षयः पुरुषः साक्षी केशवः पुरुषोत्तमः।
लोकाध्यक्षो महामायो विभीषणवरप्रदः॥ १९॥
आनन्दविग्रहो ज्योतिर्हनुमत्प्रभुरव्ययः।
भ्राजिष्णुः सहनो भोक्ता सत्यवादी बहुश्रुतः॥ २०॥
सुखदः कारणं कर्ता भवबन्धविमोचनः।
देवचूडामणिर्नेता ब्रह्मण्यो ब्रह्मवर्धनः॥ २१॥
संसारोत्तारको रामः सर्वदुःखविमोक्षकृत्।
विद्वत्तमो विश्वकर्ता विश्वहर्ता च विश्वकृत्॥ २२॥
नित्यो नियतकल्याणः सीताशोकविनाशकृत्।
काकुत्स्थः पुण्डरीकाक्षो विश्वामित्रभयापहः॥ २३॥
मारीचमथनो रामो विराधवधपण्डितः।
दुस्स्वप्ननाशनो रम्यः किरीटी त्रिदशाधिपः॥ २४॥
महाधनुर्महाकायो भीमो भीमपराक्रमः।
तत्त्वस्वरूपी तत्त्वज्ञस्तत्त्ववादी सुविक्रमः॥ २५॥
भूतात्मा भूतकृत् स्वामी कालज्ञानी महापटुः।
अनिर्विण्णो गुणग्राही निष्कलङ्कः कलङ्कहा॥ २६॥
स्वभावभद्रश्शत्रुघ्नः केशवः स्थाणुरीश्वरः।
भूतादिः शम्भुरादित्यः स्थविष्ठश्शाश्वतो ध्रुवः॥ २७॥
कवची कुण्डली चक्री खड्गी भक्तजनप्रियः।
अमृत्युर्जन्मरहितः सर्वजित् सर्वगोचरः॥ २८॥
अनुत्तमोऽप्रमेयात्मा सर्वादिर्गुणसागरः।
समः समात्मा समगो जटामुकुटमण्डितः॥ २९॥

अजेयः सर्वभूतात्मा विष्वक्सेनो महातपाः।
लोकाध्यक्षो महाबाहुरमृतो वेदवित्तमः॥ ३०॥
सहिष्णुः सद्गतिः शास्ता विश्वयोनिर्महाद्युतिः।
अतीन्द्र ऊर्जितः प्रांशुरुपेन्द्रो वामनो बली॥ ३१॥
धनुर्वेदो विधाता च ब्रह्मा विष्णुश्च शङ्करः।
हंसो मरीचिर्गोविन्दो रत्नगर्भो महामतिः॥ ३२॥
व्यासो वाचस्पतिः सर्वदर्पितासुरमर्दनः।
जानकीवल्लभः पूज्यः प्रकटः प्रीतिवर्धनः॥ ३३॥
सम्भवोऽतीन्द्रियो वेद्योऽनिर्देशो जाम्बवत्प्रभुः।
मदनो मथनो व्यापी विश्वरूपो निरञ्जनः॥ ३४॥
नारायणोऽग्रणीः साधुर्जटायुप्रीतिवर्धनः।
नैकरूपो जगन्नाथः सुरकार्यहितः स्वभूः॥ ३५॥
जितक्रोधो जितारातिः प्लवगाधिपराज्यदः।
वसुदः सुभुजो नैकमायो भव्यप्रमोदनः॥ ३६॥
चण्डांशुः सिद्धिदः कल्पः शरणागतवत्सलः।
अगदो रोगहर्ता च मन्त्रज्ञो मन्त्रभावनः॥ ३७॥
सौमित्रिवत्सलो धुर्यो व्यक्ताव्यक्तस्वरूपधृक्।
वसिष्ठो ग्रामणीः श्रीमाननुकूलः प्रियंवदः॥ ३८॥
अतुलः सात्त्विको धीरः शरासनविशारदः।
ज्येष्ठः सर्वगुणोपेतः शक्तिमांस्ताटकान्तकः॥ ३९॥
वैकुण्ठः प्राणिनां प्राणः कमठः कमलापतिः।
गोवर्धनधरो मत्स्यरूपः कारुण्यसागरः॥ ४०॥

कुम्भकर्णप्रभेत्ता च गोपिगोपालसंवृतः।
मायावी व्यापको व्यापी रैणुकेयबलापहः॥ ४१॥
पिनाकमथनो वन्द्यः समर्थो गरुडध्वजः।
लोकत्रयाश्रयो लोकचरितो भरताग्रजः॥ ४२॥
श्रीधरः सद्गतिर्लोकसाक्षी नारायणो बुधः।
मनोवेगी मनोरूपी पूर्णः पुरुषपुङ्गवः॥ ४३॥
यदुश्रेष्ठो यदुपतिर्भूतावासः सुविक्रमः।
तेजोधरो धराधारश्चतुर्मूर्तिर्महानिधिः॥ ४४॥
चाणूरमर्दनो दिव्यश्शान्तो भरतवन्दितः।
शब्दातिगो गभीरात्मा कोमलाङ्गः प्रजागरः॥ ४५॥
लोकगर्भश्शेषशायी क्षीराब्धिनिलयोऽमलः।
आत्मयोनिरदीनात्मा सहस्त्राक्षः सहस्त्रपात्॥ ४६॥
अमृतांशुर्महागर्भो निवृत्तविषयस्पृहः।
त्रिकालज्ञो मुनिस्साक्षी विहायसगतिः कृती॥ ४७॥
पर्जन्यः कुमुदो भूतावासः कमललोचनः।
श्रीवत्सवक्षाः श्रीवासो वीरहा लक्ष्मणाग्रजः॥ ४८॥
लोकाभिरामो लोकारिमर्दनः सेवकप्रियः।
सनातनतमो मेघश्यामलो राक्षसान्तकृत्॥ ४९॥
दिव्यायुधधरश्श्रीमानप्रमेयो जितेन्द्रियः।
भूदेववन्द्यो जनकप्रियकृत् प्रपितामहः॥ ५०॥
उत्तमः सात्त्विकः सत्यः सत्यसन्धस्त्रिविक्रमः।
सुव्रतः सुलभः सूक्ष्मः सुघोषः सुखदः सुधीः॥ ५१॥

दामोदरोऽच्युतश्शार्ङ्गी वामनो मधुराधिपः।
देवकीनन्दनः शौरिः शूरः कैटभमर्दनः॥ ५२॥
सप्ततालप्रभेत्ता च मित्रवंशप्रवर्धनः।
कालस्वरूपी कालात्मा कालः कल्याणदः कविः॥ ५३॥
संवत्सर ऋतुः पक्षो ह्ययनं दिवसो युगः।
स्तव्यो विविक्तो निर्लेपः सर्वव्यापी निराकुलः।
अनादिनिधनः सर्वलोकपूज्यो निरामयः॥ ५४॥
रसो रसज्ञः सारज्ञो लोकसारो रसात्मकः।
सर्वदुःखातिगो विद्याराशिः परमगोचरः॥ ५५॥
शेषो विशेषो विगतकल्मषो रघुनायकः।
वर्णश्रेष्ठो वर्णवाह्यो वर्ण्यो वर्ण्यगुणोज्ज्वलः॥ ५६॥
कर्मसाक्ष्यमरश्रेष्ठो देवदेवः सुखप्रदः।
देवाधिदेवो देवर्षिर्देवासुरनमस्कृतः॥ ५७॥
सर्वदेवमयश्चक्री शार्ङ्गपाणी रघूत्तमः।
मनो बुद्धिरहंकारः प्रकृतिः पुरुषोऽव्ययः॥ ५८॥
अहल्यापावनः स्वामी पितृभक्तो वरप्रदः।
न्यायो न्यायी नयी श्रीमान् नयो नगधरो ध्रुवः॥ ५९॥
लक्ष्मीविश्वम्भराभर्ता देवेन्द्रो बलिमर्दनः।
वाणारिमर्दनो यज्वानुत्तमो मुनिसेवितः॥ ६०॥
देवाग्रणीः शिवध्यानतत्परः परमः परः।
सामगेयः प्रियोऽक्रूरः पुण्यकीर्तिस्सुलोचनः॥ ६१॥
पुण्यः पुण्याधिकः पूर्वः पूर्णः पूरयिता रविः।

जटिलः कल्मषध्वान्तप्रभञ्जनविभावसुः ॥ ६२ ॥
अव्यक्तलक्षणोऽव्यक्तो दशास्यद्विपकेसरी ।
कलानिधिः कलानाथो कमलानन्दवर्धनः ॥ ६३ ॥
जयी जितारिः सर्वादिः शमनो भवभञ्जनः ।
अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोत्तमः ॥ ६४ ॥
आशुः शब्दपतिः शब्दागोचरो रञ्जनो रघुः ।
निश्शब्दः प्रणवो माली स्थूलः सूक्ष्मो विलक्षणः ॥ ६५ ॥
आत्मयोनिरयोनिश्च सप्तजिह्वः सहस्रपात् ।
सनातनतमस्स्रग्वी पेशलो जविनां वरः ॥ ६६ ॥
शक्तिमाञ्शङ्खभृन्नाथः गदापद्मरथाङ्गभृत् ।
निरीहो निर्विकल्पश्च चिद्रूपो वीतसाध्वसः ॥ ६७ ॥
शताननः सहस्राक्षः शतमूर्तिर्घनप्रभः ।
हृत्पुण्डरीकशयनः कठिनो द्रव एव च ॥ ६८ ॥
उग्रो ग्रहपतिः श्रीमान् समर्थोऽनर्थनाशनः ।
अधर्मशत्रू रक्षोघ्नः पुरुहूतः पुरुष्टुतः ॥ ६९ ॥
ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।
हिरण्यगर्भो ज्योतिष्मान् सुललाटः सुविक्रमः ॥ ७० ॥
शिवपूजारतः श्रीमान् भवानीप्रियकृद्वशी ।
नरो नारायणः श्यामः कपर्दीनीललोहितः ॥ ७१ ॥
रुद्रः पशुपतिः स्थाणुर्विश्वामित्रो द्विजेश्वरः ।
मातामहो मातरिश्वा विरिञ्चोविष्टरश्रवाः ॥ ७२ ॥
अक्षोभ्यः सर्वभूतानां चण्डः सत्यपराक्रमः ।

वालखिल्यो महाकल्पः कल्पवृक्षः कलाधरः ॥ ७३ ॥
निदाघस्तपनोऽमोघः श्लक्ष्णः परबलापहृत्।
कबन्धमथनो दिव्यः कम्बुग्रीवशिवप्रियः ॥ ७४ ॥
शङ्खोऽनिलः सुनिष्पन्नः सुलभः शिशिरात्मकः।
असंसृष्टोऽतिथिः शूरः प्रमाथी पापनाशकृत् ॥ ७५ ॥
वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः।
रामो नीलोत्पलश्यामो ज्ञानस्कन्धो महाद्युतिः ॥ ७६ ॥
पवित्रपादः पापारिर्मणिपूरो नभोगतिः।
उत्तारणो दुष्कृतिहा दुर्धर्षो दुस्सहोऽभयः ॥ ७७ ॥
अमृतेशोऽमृतवपुर्धर्मी धर्मः कृपाकरः।
भर्गो विवस्वानादित्यो योगाचार्यो दिवस्पतिः ॥ ७८ ॥
उदारकीर्तिरुद्योगी वाङ्मयः सदसन्मयः।
नक्षत्रमाली नाकेशः स्वाधिष्ठानः षडाश्रयः ॥ ७९ ॥
चतुर्वर्गफलो वर्णी शक्तित्रयफलं निधिः।
निधानगर्भो निर्व्याजो गिरीशो व्यालमर्दनः ॥ ८० ॥
श्रीवल्लभः शिवारम्भः शान्तिर्भद्रः समञ्जसः।
भूशयो भूतिकृद्भूतिर्भूषणो भूतवाहनः ॥ ८१ ॥
अकायो भक्तकायस्थः कालज्ञानी महावटुः।
परार्थवृत्तिरचलो विविक्तः श्रुतिसागरः ॥ ८२ ॥
स्वभावभद्रो मध्यस्थः संसारभयनाशनः।
वेद्यो वैद्यो वियद्गोप्ता सर्वामरमुनीश्वरः ॥ ८३ ॥
सुरेन्द्रः करणं कर्म कर्मकृत् कर्म्यधोक्षजः।

ध्येयो धुर्यो धराधीशः संकल्पः शर्वरीपतिः ॥ ८४ ॥
परमार्थगुरुर्वृद्धः शुचिराश्रितवत्सलः ।
विष्णुर्जिष्णुर्विभुर्वन्द्यो यज्ञेशो यज्ञपालकः ॥ ८५ ॥
प्रभविष्णुर्ग्रसिष्णुश्च लोकात्मा लोकभावनः ।
केशवः केशिहा काव्यः कविः कारणकारणम् ॥ ८६ ॥
कालकर्ता कालशेषो वासुदेवः पुरुष्टुतः ।
आदिकर्ता वराहश्च माधवो मधुसूदनः ॥ ८७ ॥
नारायणो नरो हंसो विष्वक्सेनो जनार्दनः ।
विश्वकर्ता महायज्ञो ज्योतिष्मान् पुरुषोत्तमः ॥ ८८ ॥
वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः ।
नारसिंहो महाभीमो वक्रदंष्ट्रो नखायुधः ॥ ८९ ॥
आदिदेवो जगत्कर्ता योगीशो गरुडध्वजः ।
गोविन्दो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः ॥ ९० ॥
पद्मनाभो हृषीकेशो धाता दामोदरः प्रभुः ।
त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः ॥ ९१ ॥
वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ।
भक्तप्रियोऽच्युतः सत्यः सत्यकीर्तिर्धृतिः स्मृतिः ॥ ९२ ॥
कारुण्यं करुणो व्यासः पापहा शान्तिवर्धनः ।
संन्यासी शास्त्रतत्त्वज्ञो मन्दराद्रिनिकेतनः ॥ ९३ ॥
बदरीनिलयः शान्तस्तपस्वी वैद्युतप्रभः ।
भूतावासो गुहावासः श्रीनिवासः श्रियःपतिः ॥ ९४ ॥
तपोवासो मुदावासः सत्यवासः सनातनः ।

पुरुषः पुष्करः पुण्यः पुष्कराक्षो महेश्वरः ॥ ९५ ॥
पूर्णमूर्तिः पुराणज्ञः पुण्यदः प्रीतिवर्धनः ।
शङ्खी चक्री गदी शार्ङ्गी लाङ्गली मुसली हली ॥ ९६ ॥
किरीटी कुण्डली हारी मेखली कवची ध्वजी ।
योद्धा जेता महावीर्यः शत्रुजिच्छत्रुतापनः ॥ ९७ ॥
शास्ता शास्त्रकरः शास्त्रं शङ्करः शङ्करस्तुतः ।
सारथिः सात्त्विकः स्वामी सामवेदप्रियः समः ॥ ९८ ॥
पवनः संहतः शक्तिः सम्पूर्णाङ्गः समृद्धिमान् ।
स्वर्गदः कामदः श्रीदः कीर्तिदोऽकीर्तिनाशनः ॥ ९९ ॥
मोक्षदः पुण्डरीकाक्षः क्षीराब्धिकृतकेतनः ।
सर्वात्मा सर्वलोकेशः प्रेरकः पापनाशनः ॥ १०० ॥
सर्वव्यापी जगन्नाथः सर्वलोकमहेश्वरः ।
सर्गस्थित्यन्तकृद्देवः सर्वलोकसुखावहः ॥ १०१ ॥
अक्षय्यः शाश्वतोऽनन्तः क्षयवृद्धिविवर्जितः ।
निर्लेपो निर्गुणः सूक्ष्मो निर्विकारो निरञ्जनः ॥ १०२ ॥
सर्वोपाधिविनिर्मुक्तः सत्तामात्रव्यवस्थितः ।
अधिकारी विभुर्नित्यः परमात्मा सनातनः ॥ १०३ ॥
अचलो निर्मलो व्यापी नित्यतृप्तो निराश्रयः ।
श्यामो युवा लोहिताक्षो दीप्तास्यो मितभाषणः ॥ १०४ ॥
आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ।
सत्यवान् गुणसम्पन्नः स्वयंतेजाः सुदीप्तिमान् ॥ १०५ ॥
कालात्मा भगवान् कालः कालचक्रप्रवर्तकः ।

नारायणः परंज्योतिः परमात्मा सनातनः ॥ १०६ ॥
विश्वसृड्विश्वगोप्ता च विश्वभोक्ता च शाश्वतः ।
विश्वेश्वरो विश्वमूर्तिर्विश्वात्मा विश्वभावनः ॥ १०७ ॥
सर्वभूतसुहृच्छान्तः सर्वभूतानुकम्पनः ।
सर्वेश्वरेश्वरः सर्वः श्रीमानाश्रितवत्सलः ॥ १०८ ॥
सर्वगः सर्वभूतेशः सर्वभूताशयस्थितः ।
अभ्यन्तरस्थस्तमसश्छेत्ता नारायणः परः ॥ १०९ ॥
अनादिनिधनः स्त्रष्टा प्रजापतिपतिर्हरिः ।
नरसिंहो हृषीकेशः सर्वात्मा सर्वदृग् वशी ॥ ११० ॥
जगतस्तस्थुषश्चैव प्रभुर्नेता सनातनः ।
कर्ता धाता विधाता च सर्वेषां प्रभुरीश्वरः ॥ १११ ॥
सहस्त्रमूर्तिर्विश्वात्मा विष्णुर्विश्वदृगव्ययः ।
पुराणपुरुषः स्त्रष्टा सहस्त्राक्षः सहस्त्रपात् ॥ ११२ ॥
तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः ।
परमात्मा परं ब्रह्म सच्चिदानन्दविग्रहः ॥ ११३ ॥
परं ज्योतिः परं धाम पराकाशः परात्परः ।
अच्युतः पुरुषः कृष्णः शाश्वतः शिव ईश्वरः ॥ ११४ ॥
नित्यः सर्वगतः स्थाणुरुग्रः साक्षी प्रजापतिः ।
हिरण्यगर्भः सविता लोककृल्लोकभृद्विभुः ॥ ११५ ॥
रामः श्रीमान् महाविष्णुर्जिष्णुर्देवहितावहः ।
तत्त्वात्मा तारकं ब्रह्म शाश्वतः सर्वसिद्धिदः ॥ ११६ ॥
अकारवाच्यो भगवान् श्रीर्भूलीलापतिः पुमान् ।
सर्वलोकेश्वरः श्रीमान् सर्वज्ञः सर्वतोमुखः ॥ ११७ ॥

स्वामी सुशीलः सुलभः सर्वज्ञः सर्वशक्तिमान्।
नित्यः सम्पूर्णकामश्च नैसर्गिकसुहृत् सुखी॥ ११८॥
कृपापीयूषजलधिश्शरण्यः सर्वदेहिनाम्।
श्रीमान्नारायणः स्वामी जगतां पतिरीश्वरः॥ ११९॥
श्रीशः शरण्यो भूतानां संश्रिताभीष्टदायकः।
अनन्तः श्रीपती रामो गुणभृन्निर्गुणो महान्॥ १२०॥

॥ इति श्रीआनन्दरामायणे वाल्मीकीये श्रीरामसहस्त्रनामस्तोत्रं सम्पूर्णम्॥

॥ श्रीरामाय नमः ॥

# श्रीरामसहस्त्रनामावलिः

१ ॐ राजीवलोचनाय नमः।
२ ॐ श्रीमते नमः।
३ ॐ श्रीरामाय नमः।
४ ॐ रघुपुङ्गवाय नमः।
५ ॐ रामभद्राय नमः।
६ ॐ सदाचाराय नमः।
७ ॐ राजेन्द्राय नमः।
८ ॐ जानकीपतये नमः।
९ ॐ अग्रगण्याय नमः।
१० ॐ वरेण्याय नमः।
११ ॐ वरदाय नमः।
१२ ॐ परमेश्वराय नमः।
१३ ॐ जनार्दनाय नमः।
१४ ॐ जितामित्राय नमः।
१५ ॐ परार्थैकप्रयोजनाय नमः।
१६ ॐ विश्वामित्रप्रियाय नमः।
१७ ॐ दान्ताय नमः।
१८ ॐ शत्रुजिते नमः।
१९ ॐ शत्रुतापनाय नमः।
२० ॐ सर्वज्ञाय नमः।
२१ ॐ सर्वदेवादये नमः।
२२ ॐ शरण्याय नमः।
२३ ॐ वालिमर्दनाय नमः।
२४ ॐ ज्ञानभाव्याय नमः।
२५ ॐ अपरिच्छेद्याय नमः।
२६ ॐ वाग्मिने नमः।
२७ ॐ सत्यव्रताय नमः।
२८ ॐ शुचये नमः।
२९ ॐ ज्ञानगम्याय नमः।
३० ॐ दृढप्रज्ञाय नमः।
३१ ॐ खरध्वंसिने नमः।
३२ ॐ प्रतापवते नमः।
३३ ॐ द्युतिमते नमः।
३४ ॐ आत्मवते नमः।
३५ ॐ वीराय नमः।
३६ ॐ जितक्रोधाय नमः।
३७ ॐ अरिमर्दनाय नमः।
३८ ॐ विश्वरूपाय नमः।
३९ ॐ विशालाक्षाय नमः।
४० ॐ प्रभवे नमः।
४१ ॐ परिवृढाय नमः।
४२ ॐ दृढाय नमः।
४३ ॐ ईशाय नमः।
४४ ॐ खड्गधराय नमः।
४५ ॐ श्रीमते नमः।
४६ ॐ कौसलेयाय नमः।
४७ ॐ अनसूयकाय नमः।
४८ ॐ विपुलांसाय नमः।

४९ ॐ महोरस्काय नमः।
५० ॐ परमेष्ठिने नमः।
५१ ॐ परायणाय नमः।
५२ ॐ सत्यव्रताय नमः।
५३ ॐ सत्यसन्धाय नमः।
५४ ॐ गुरवे नमः।
५५ ॐ परमधार्मिकाय नमः।
५६ ॐ लोकज्ञाय नमः।
५७ ॐ लोकवन्द्याय नमः।
५८ ॐ लोकात्मने नमः।
५९ ॐ लोककृते नमः।
६० ॐ परस्मै नमः।
६१ ॐ अनादये नमः।
६२ ॐ भगवते नमः।
६३ ॐ सेव्याय नमः।
६४ ॐ जितमायाय नमः।
६५ ॐ रघूद्वहाय नमः।
६६ ॐ रामाय नमः।
६७ ॐ दयाकराय नमः।
६८ ॐ दक्षाय नमः।
६९ ॐ सर्वज्ञाय नमः।
७० ॐ सर्वपावनाय नमः।
७१ ॐ ब्रह्मण्याय नमः।
७२ ॐ नीतिमते नमः।
७३ ॐ गोप्त्रे नमः।
७४ ॐ सर्वदेवमयाय नमः।
७५ ॐ हरये नमः।
७६ ॐ सुन्दराय नमः।
७७ ॐ पीतवाससे नमः।
७८ ॐ सूत्रकाराय नमः।
७९ ॐ पुरातनाय नमः।
८० ॐ सौम्याय नमः।
८१ ॐ महर्षये नमः।
८२ ॐ कोदण्डिने नमः।
८३ ॐ सर्वज्ञाय नमः।
८४ ॐ सर्वकोविदाय नमः।
८५ ॐ कवये नमः।
८६ ॐ सुग्रीववरदाय नमः।
८७ ॐ सर्वपुण्याधिकप्रदाय नमः।
८८ ॐ भव्याय नमः।
८९ ॐ जितारिषड्वर्गाय नमः।
९० ॐ महोदराय नमः।
९१ ॐ अघनाशनाय नमः।
९२ ॐ सुकीर्तये नमः।
९३ ॐ आदिपुरुषाय नमः।
९४ ॐ कान्ताय नमः।
९५ ॐ पुण्यकृतागमाय नमः।
९६ ॐ अकल्मषाय नमः।
९७ ॐ चतुर्बाहवे नमः।
९८ ॐ सर्वावासाय नमः।
९९ ॐ दुरासदाय नमः।
१०० ॐ स्मितभाषिणे नमः।
१०१ ॐ निवृत्तात्मने नमः।
१०२ ॐ स्मृतिमते नमः।
१०३ ॐ वीर्यवते नमः।
१०४ ॐ प्रभवे नमः।

१०५ ॐ धीराय नमः।
१०६ ॐ दान्ताय नमः।
१०७ ॐ घनश्यामाय नमः।
१०८ ॐ सर्वायुधविशारदाय नमः।
१०९ ॐ अध्यात्मयोगनिलयाय नमः।
११० ॐ सुमनसे नमः।
१११ ॐ लक्ष्मणाग्रजाय नमः।
११२ ॐ सर्वतीर्थमयाय नमः।
११३ ॐ शूराय नमः।
११४ ॐ सर्वयज्ञफलप्रदाय नमः।
११५ ॐ यज्ञस्वरूपिणे नमः।
११६ ॐ यज्ञेशाय नमः।
११७ ॐ जरामरणवर्जिताय नमः।
११८ ॐ वर्णाश्रमकराय नमः।
११९ ॐ वर्णिने नमः।
१२० ॐ शत्रुजिते नमः।
१२१ ॐ पुरुषोत्तमाय नमः।
१२२ ॐ विभीषणप्रतिष्ठात्रे नमः।
१२३ ॐ परमात्मने नमः।
१२४ ॐ परात्परस्मै नमः।
१२५ ॐ प्रमाणभूताय नमः।
१२६ ॐ दुर्ज्ञेयाय नमः।
१२७ ॐ पूर्णाय नमः।
१२८ ॐ परपुरञ्जयाय नमः।
१२९ ॐ अनन्तदृष्टये नमः।
१३० ॐ आनन्दाय नमः।
१३१ ॐ धनुर्वेदाय नमः।
१३२ ॐ धनुर्धराय नमः।
१३३ ॐ गुणाकराय नमः।
१३४ ॐ गुणश्रेष्ठाय नमः।
१३५ ॐ सच्चिदानन्दविग्रहाय नमः।
१३६ ॐ अभिवन्द्याय नमः।
१३७ ॐ महाकायाय नमः।
१३८ ॐ विश्वकर्मणे नमः।
१३९ ॐ विशारदाय नमः।
१४० ॐ विनीतात्मने नमः।
१४१ ॐ वीतरागाय नमः।
१४२ ॐ तपस्वीशाय नमः।
१४३ ॐ जनेश्वराय नमः।
१४४ ॐ कल्याणप्रकृतये नमः।
१४५ ॐ कल्पाय नमः।
१४६ ॐ सर्वेशाय नमः।
१४७ ॐ सर्वकामदाय नमः।
१४८ ॐ अक्षयाय नमः।
१४९ ॐ पुरुषाय नमः।
१५० ॐ साक्षिणे नमः।
१५१ ॐ केशवाय नमः।
१५२ ॐ पुरुषोत्तमाय नमः।
१५३ ॐ लोकाध्यक्षाय नमः।
१५४ ॐ महामायाय नमः।
१५५ ॐ विभीषणवरप्रदाय नमः।
१५६ ॐ आनन्दविग्रहाय नमः।
१५७ ॐ ज्योतिषे नमः।
१५८ ॐ हनुमत्प्रभवे नमः।
१५९ ॐ अव्ययाय नमः।
१६० ॐ भ्राजिष्णवे नमः।

१६१ ॐ सहनाय नमः।
१६२ ॐ भोक्त्रे नमः।
१६३ ॐ सत्यवादिने नमः।
१६४ ॐ बहुश्रुताय नमः।
१६५ ॐ सुखदाय नमः।
१६६ ॐ कारणाय नमः।
१६७ ॐ कर्त्रे नमः।
१६८ ॐ भवबन्धविमोचनाय नमः।
१६९ ॐ देवचूडामणये नमः।
१७० ॐ नेत्रे नमः।
१७१ ॐ ब्रह्मण्याय नमः।
१७२ ॐ ब्रह्मवर्धनाय नमः।
१७३ ॐ संसारोत्तारकाय नमः।
१७४ ॐ रामाय नमः।
१७५ ॐ सर्वदुःखविमोक्षकृते नमः।
१७६ ॐ विद्वत्तमाय नमः।
१७७ ॐ विश्वकर्त्रे नमः।
१७८ ॐ विश्वहर्त्रे नमः।
१७९ ॐ विश्वकृते नमः।
१८० ॐ नित्याय नमः।
१८१ ॐ नियतकल्याणाय नमः।
१८२ ॐ सीताशोकविनाशकृते नमः।
१८३ ॐ काकुत्स्थाय नमः।
१८४ ॐ पुण्डरीकाक्षाय नमः।
१८५ ॐ विश्वामित्रभयापहाय नमः।
१८६ ॐ मारीचमथनाय नमः।
१८७ ॐ रामाय नमः।
१८८ ॐ विराधवधपण्डिताय नमः।
१८९ ॐ दुस्स्वप्नप्रनाशनाय नमः।
१९० ॐ रम्याय नमः।
१९१ ॐ किरीटिने नमः।
१९२ ॐ त्रिदशाधिपाय नमः।
१९३ ॐ महाधनुषे नमः।
१९४ ॐ महाकायाय नमः।
१९५ ॐ भीमाय नमः।
१९६ ॐ भीमपराक्रमाय नमः।
१९७ ॐ तत्त्वस्वरूपिणे नमः।
१९८ ॐ तत्त्वज्ञाय नमः।
१९९ ॐ तत्त्ववादिने नमः।
२०० ॐ सुविक्रमाय नमः।
२०१ ॐ भूतात्मने नमः।
२०२ ॐ भूतकृते नमः।
२०३ ॐ स्वामिने नमः।
२०४ ॐ कालज्ञानिने नमः।
२०५ ॐ महापटवे नमः।
२०६ ॐ अनिर्विण्णाय नमः।
२०७ ॐ गुणग्राहिणे नमः।
२०८ ॐ निष्कलङ्काय नमः।
२०९ ॐ कलङ्कघ्ने नमः।
२१० ॐ स्वभावभद्राय नमः।
२११ ॐ शत्रुघ्नाय नमः।
२१२ ॐ केशवाय नमः।
२१३ ॐ स्थाणवे नमः।
२१४ ॐ ईश्वराय नमः।
२१५ ॐ भूतादये नमः।
२१६ ॐ शम्भवे नमः।

२१७ ॐ आदित्याय नमः।
२१८ ॐ स्थविष्ठाय नमः।
२१९ ॐ शाश्वताय नमः।
२२० ॐ ध्रुवाय नमः।
२२१ ॐ कवचिने नमः।
२२२ ॐ कुण्डलिने नमः।
२२३ ॐ चक्रिणे नमः।
२२४ ॐ खड्गिने नमः।
२२५ ॐ भक्तजनप्रियाय नमः।
२२६ ॐ अमृत्यवे नमः।
२२७ ॐ जन्मरहिताय नमः।
२२८ ॐ सर्वजिते नमः।
२२९ ॐ सर्वगोचराय नमः।
२३० ॐ अनुत्तमाय नमः।
२३१ ॐ अप्रमेयात्मने नमः।
२३२ ॐ सर्वादये नमः।
२३३ ॐ गुणसागराय नमः।
२३४ ॐ समाय नमः।
२३५ ॐ समात्मने नमः।
२३६ ॐ समगाय नमः।
२३७ ॐ जटामुकुटमण्डिताय नमः।
२३८ ॐ अजेयाय नमः।
२३९ ॐ सर्वभूतात्मने नमः।
२४० ॐ विष्वक्सेनाय नमः।
२४१ ॐ महातपसे नमः।
२४२ ॐ लोकाध्यक्षाय नमः।
२४३ ॐ महाबाहवे नमः।
२४४ ॐ अमृताय नमः।
२४५ ॐ वेदवित्तमाय नमः।
२४६ ॐ सहिष्णवे नमः।
२४७ ॐ सद्गतये नमः।
२४८ ॐ शास्त्रे नमः।
२४९ ॐ विश्वयोनये नमः।
२५० ॐ महाद्युतये नमः।
२५१ ॐ अतीन्द्राय नमः।
२५२ ॐ ऊर्जिताय नमः।
२५३ ॐ प्रांशवे नमः।
२५४ ॐ उपेन्द्राय नमः।
२५५ ॐ वामनाय नमः।
२५६ ॐ बलिने नमः।
२५७ ॐ धनुर्वेदाय नमः।
२५८ ॐ विधात्रे नमः।
२५९ ॐ ब्रह्मणे नमः।
२६० ॐ विष्णवे नमः।
२६१ ॐ शङ्कराय नमः।
२६२ ॐ हंसाय नमः।
२६३ ॐ मरीचये नमः।
२६४ ॐ गोविन्दाय नमः।
२६५ ॐ रत्नगर्भाय नमः।
२६६ ॐ महामतये नमः।
२६७ ॐ व्यासाय नमः।
२६८ ॐ वाचस्पतये नमः।
२६९ ॐ सर्वदर्पितासुरमर्दनाय नमः।
२७० ॐ जानकीवल्लभाय नमः।
२७१ ॐ पूज्याय नमः।
२७२ ॐ प्रकटाय नमः।

२७३ ॐ प्रीतिवर्धनाय नमः।
२७४ ॐ सम्भवाय नमः।
२७५ ॐ अतीन्द्रियाय नमः।
२७६ ॐ वेद्याय नमः।
२७७ ॐ अनिर्देशाय नमः।
२७८ ॐ जाम्बवत्प्रभवे नमः।
२७९ ॐ मदनाय नमः।
२८० ॐ मथनाय नमः।
२८१ ॐ व्यापिने नमः।
२८२ ॐ विश्वरूपाय नमः।
२८३ ॐ निरञ्जनाय नमः।
२८४ ॐ नारायणाय नमः।
२८५ ॐ अग्रण्ये नमः।
२८६ ॐ साधवे नमः।
२८७ ॐ जटायुप्रीतिवर्धनाय नमः।
२८८ ॐ नैकरूपाय नमः।
२८९ ॐ जगन्नाथाय नमः।
२९० ॐ सुरकार्यहिताय नमः।
२९१ ॐ स्वभुवे नमः।
२९२ ॐ जितक्रोधाय नमः।
२९३ ॐ जितारातये नमः।
२९४ ॐ प्लवगाधिपराज्यदाय नमः।
२९५ ॐ वसुदाय नमः।
२९६ ॐ सुभुजाय नमः।
२९७ ॐ नैकमायाय नमः।
२९८ ॐ भव्यप्रमोदनाय नमः।
२९९ ॐ चण्डांशवे नमः।
३०० ॐ सिद्धिदाय नमः।
३०१ ॐ कल्पाय नमः।
३०२ ॐ शरणागतवत्सलाय नमः।
३०३ ॐ अगदाय नमः।
३०४ ॐ रोगहर्त्रे नमः।
३०५ ॐ मन्त्रज्ञाय नमः।
३०६ ॐ मन्त्रभावनाय नमः।
३०७ ॐ सौमित्रिवत्सलाय नमः।
३०८ ॐ धुर्याय नमः।
३०९ ॐ व्यक्ताव्यक्तस्वरूपधृते नमः।
३१० ॐ वसिष्ठाय नमः।
३११ ॐ ग्रामण्ये नमः।
३१२ ॐ श्रीमते नमः।
३१३ ॐ अनुकूलाय नमः।
३१४ ॐ प्रियंवदाय नमः।
३१५ ॐ अतुलाय नमः।
३१६ ॐ सात्त्विकाय नमः।
३१७ ॐ धीराय नमः।
३१८ ॐ शरासनविशारदाय नमः।
३१९ ॐ ज्येष्ठाय नमः।
३२० ॐ सर्वगुणोपेताय नमः।
३२१ ॐ शक्तिमते नमः।
३२२ ॐ ताटकान्तकाय नमः।
३२३ ॐ वैकुण्ठाय नमः।
३२४ ॐ प्राणिनां प्राणाय नमः।
३२५ ॐ कमठाय नमः।
३२६ ॐ कमलापतये नमः।
३२७ ॐ गोवर्धनधराय नमः।
३२८ ॐ मत्स्यरूपाय नमः।

३२९ ॐ कारुण्यसागराय नमः।
३३० ॐ कुम्भकर्णप्रभेत्त्रे नमः।
३३१ ॐ गोपिगोपालसंवृताय नमः।
३३२ ॐ मायाविने नमः।
३३३ ॐ व्यापकाय नमः।
३३४ ॐ व्यापिने नमः।
३३५ ॐ रैणुकेयबलापहाय नमः।
३३६ ॐ पिनाकमथनाय नमः।
३३७ ॐ वन्द्याय नमः।
३३८ ॐ समर्थाय नमः।
३३९ ॐ गरुडध्वजाय नमः।
३४० ॐ लोकत्रयाश्रयाय नमः।
३४१ ॐ लोकचरिताय नमः।
३४२ ॐ भरताग्रजाय नमः।
३४३ ॐ श्रीधराय नमः।
३४४ ॐ सद्गतये नमः।
३४५ ॐ लोकसाक्षिणे नमः।
३४६ ॐ नारायणाय नमः।
३४७ ॐ बुधाय नमः।
३४८ ॐ मनोवेगिने नमः।
३४९ ॐ मनोरूपिणे नमः।
३५० ॐ पूर्णाय नमः।
३५१ ॐ पुरुषपुङ्गवाय नमः।
३५२ ॐ यदुश्रेष्ठाय नमः।
३५३ ॐ यदुपतये नमः।
३५४ ॐ भूतावासाय नमः।
३५५ ॐ सुविक्रमाय नमः।
३५६ ॐ तेजोधराय नमः।
३५७ ॐ धराधाराय नमः।
३५८ ॐ चतुर्मूर्तये नमः।
३५९ ॐ महानिधये नमः।
३६० ॐ चाणूरमर्दनाय नमः।
३६१ ॐ दिव्याय नमः।
३६२ ॐ शान्ताय नमः।
३६३ ॐ भरतवन्दिताय नमः।
३६४ ॐ शब्दातिगाय नमः।
३६५ ॐ गभीरात्मने नमः।
३६६ ॐ कोमलाङ्गाय नमः।
३६७ ॐ प्रजागराय नमः।
३६८ ॐ लोकगर्भाय नमः।
३६९ ॐ शेषशायिने नमः।
३७० ॐ क्षीराब्धिनिलयाय नमः।
३७१ ॐ अमलाय नमः।
३७२ ॐ आत्मयोनये नमः।
३७३ ॐ अदीनात्मने नमः।
३७४ ॐ सहस्त्राक्षाय नमः।
३७५ ॐ सहस्त्रपदे नमः।
३७६ ॐ अमृतांशवे नमः।
३७७ ॐ महागर्भाय नमः।
३७८ ॐ निवृत्तविषयस्पृहाय नमः।
३७९ ॐ त्रिकालज्ञाय नमः।
३८० ॐ मुनये नमः।
३८१ ॐ साक्षिणे नमः।
३८२ ॐ विहायसगतये नमः।
३८३ ॐ कृतिने नमः।
३८४ ॐ पर्जन्याय नमः।

३८५ ॐ कुमुदाय नमः।
३८६ ॐ भूतावासाय नमः।
३८७ ॐ कमललोचनाय नमः।
३८८ ॐ श्रीवत्सवक्षसे नमः।
३८९ ॐ श्रीवासाय नमः।
३९० ॐ वीरघ्ने नमः।
३९१ ॐ लक्ष्मणाग्रजाय नमः।
३९२ ॐ लोकाभिरामाय नमः।
३९३ ॐ लोकारिमर्दनाय नमः।
३९४ ॐ सेवकप्रियाय नमः।
३९५ ॐ सनातनतमाय नमः।
३९६ ॐ मेघश्यामलाय नमः।
३९७ ॐ राक्षसान्तकृते नमः।
३९८ ॐ दिव्यायुधधराय नमः।
३९९ ॐ श्रीमते नमः।
४०० ॐ अप्रमेयाय नमः।
४०१ ॐ जितेन्द्रियाय नमः।
४०२ ॐ भूदेववन्द्याय नमः।
४०३ ॐ जनकप्रियकृते नमः।
४०४ ॐ प्रपितामहाय नमः।
४०५ ॐ उत्तमाय नमः।
४०६ ॐ सात्त्विकाय नमः।
४०७ ॐ सत्याय नमः।
४०८ ॐ सत्यसन्धाय नमः।
४०९ ॐ त्रिविक्रमाय नमः।
४१० ॐ सुव्रताय नमः।
४११ ॐ सुलभाय नमः।
४१२ ॐ सूक्ष्माय नमः।
४१३ ॐ सुघोषाय नमः।
४१४ ॐ सुखदाय नमः।
४१५ ॐ सुधिये नमः।
४१६ ॐ दामोदराय नमः।
४१७ ॐ अच्युताय नमः।
४१८ ॐ शार्ङ्गिणे नमः।
४१९ ॐ वामनाय नमः।
४२० ॐ मधुराधिपाय नमः।
४२१ ॐ देवकीनन्दनाय नमः।
४२२ ॐ शौरये नमः।
४२३ ॐ शूराय नमः।
४२४ ॐ कैटभमर्दनाय नमः।
४२५ ॐ सप्ततालप्रभेत्त्रे नमः।
४२६ ॐ मित्रवंशप्रवर्धनाय नमः।
४२७ ॐ कालस्वरूपिणे नमः।
४२८ ॐ कालात्मने नमः।
४२९ ॐ कालाय नमः।
४३० ॐ कल्याणदाय नमः।
४३१ ॐ कवये नमः।
४३२ ॐ संवत्सराय नमः।
४३३ ॐ ऋतवे नमः।
४३४ ॐ पक्षाय नमः।
४३५ ॐ अयनाय नमः।
४३६ ॐ दिवसाय नमः।
४३७ ॐ युगाय नमः।
४३८ ॐ स्तव्याय नमः।
४३९ ॐ विविक्ताय नमः।
४४० ॐ निर्लेपायः नमः।

४४१ ॐ सर्वव्यापिने नमः।
४४२ ॐ निराकुलाय नमः।
४४३ ॐ अनादिनिधनाय नमः।
४४४ ॐ सर्वलोकपूज्याय नमः।
४४५ ॐ निरामयाय नमः।
४४६ ॐ रसाय नमः।
४४७ ॐ रसज्ञाय नमः।
४४८ ॐ सारज्ञाय नमः।
४४९ ॐ लोकसाराय नमः।
४५० ॐ रसात्मकाय नमः।
४५१ ॐ सर्वदुःखातिगाय नमः।
४५२ ॐ विद्याराशये नमः।
४५३ ॐ परमगोचराय नमः।
४५४ ॐ शेषाय नमः।
४५५ ॐ विशेषाय नमः।
४५६ ॐ विगतकल्मषाय नमः।
४५७ ॐ रघुनायकाय नमः।
४५८ ॐ वर्णश्रेष्ठाय नमः।
४५९ ॐ वर्णवाह्याय नमः।
४६० ॐ वर्ण्याय नमः।
४६१ ॐ वर्ण्यगुणोज्ज्वलाय नमः।
४६२ ॐ कर्मसाक्षिणे नमः।
४६३ ॐ अमरश्रेष्ठाय नमः।
४६४ ॐ देवदेवाय नमः।
४६५ ॐ सुखप्रदाय नमः।
४६६ ॐ देवाधिदेवाय नमः।
४६७ ॐ देवर्षये नमः।
४६८ ॐ देवासुरनमस्कृताय नमः।
४६९ ॐ सर्वदेवमयाय नमः।
४७० ॐ चक्रिणे नमः।
४७१ ॐ शार्ङ्गपाणये नमः।
४७२ ॐ रघूत्तमाय नमः।
४७३ ॐ मनसे नमः।
४७४ ॐ बुद्ध्यै नमः।
४७५ ॐ अहंकाराय नमः।
४७६ ॐ प्रकृत्यै नमः।
४७७ ॐ पुरुषाय नमः।
४७८ ॐ अव्ययाय नमः।
४७९ ॐ अहल्यापावनाय नमः।
४८० ॐ स्वामिने नमः।
४८१ ॐ पितृभक्ताय नमः।
४८२ ॐ वरप्रदाय नमः।
४८३ ॐ न्यायाय नमः।
४८४ ॐ न्यायिने नमः।
४८५ ॐ नयिने नमः।
४८६ ॐ श्रीमते नमः।
४८७ ॐ नयाय नमः।
४८८ ॐ नगधराय नमः।
४८९ ॐ ध्रुवाय नमः।
४९० ॐ लक्ष्मीविश्वम्भराभर्त्रे नमः।
४९१ ॐ देवेन्द्राय नमः।
४९२ ॐ बलिमर्दनाय नमः।
४९३ ॐ वाणारिमर्दनाय नमः।
४९४ ॐ यज्वने नमः।
४९५ ॐ अनुत्तमाय नमः।
४९६ ॐ मुनिसेविताय नमः।

४९७ ॐ देवाग्रणये नमः।
४९८ ॐ शिवध्यानतत्पराय नमः।
४९९ ॐ परमाय नमः।
५०० ॐ परस्मै नमः।
५०१ ॐ सामगेयाय नमः।
५०२ ॐ प्रियाय नमः।
५०३ ॐ अक्रूराय नमः।
५०४ ॐ पुण्यकीर्तये नमः।
५०५ ॐ सुलोचनाय नमः।
५०६ ॐ पुण्याय नमः।
५०७ ॐ पुण्याधिकाय नमः।
५०८ ॐ पूर्वस्मै नमः।
५०९ ॐ पूर्णाय नमः।
५१० ॐ पूरयित्रे नमः।
५११ ॐ रवये नमः।
५१२ ॐ जटिलाय नमः।
५१३ ॐ कल्मषध्वान्तप्रभञ्जन-विभावसवे नमः।
५१४ ॐ अव्यक्तलक्षणाय नमः।
५१५ ॐ अव्यक्ताय नमः।
५१६ ॐ दशास्यद्विपकेसरिणे नमः।
५१७ ॐ कलानिधये नमः।
५१८ ॐ कलानाथाय नमः।
५१९ ॐ कमलानन्दवर्धनाय नमः।
५२० ॐ जयिने नमः।
५२१ ॐ जितारये नमः।
५२२ ॐ सर्वादये नमः।
५२३ ॐ शमनाय नमः।
५२४ ॐ भवभञ्जनाय नमः।
५२५ ॐ अलंकरिष्णवे नमः।
५२६ ॐ अचलाय नमः।
५२७ ॐ रोचिष्णवे नमः।
५२८ ॐ विक्रमोत्तमाय नमः।
५२९ ॐ आशवे नमः।
५३० ॐ शब्दपतये नमः।
५३१ ॐ शब्दागोचराय नमः।
५३२ ॐ रञ्जनाय नमः।
५३३ ॐ रघवे नमः।
५३४ ॐ निश्शब्दाय नमः।
५३५ ॐ प्रणवाय नमः।
५३६ ॐ मालिने नमः।
५३७ ॐ स्थूलाय नमः।
५३८ ॐ सूक्ष्माय नमः।
५३९ ॐ विलक्षणाय नमः।
५४० ॐ आत्मयोनये नमः।
५४१ ॐ अयोनये नमः।
५४२ ॐ सप्तजिह्वाय नमः।
५४३ ॐ सहस्त्रपदे नमः।
५४४ ॐ सनातनतमाय नमः।
५४५ ॐ स्त्रग्विणे नमः।
५४६ ॐ पेशलाय नमः।
५४७ ॐ जविनां वराय नमः।
५४८ ॐ शक्तिमते नमः।
५४९ ॐ शङ्खभृते नमः।
५५० ॐ नाथाय नमः।
५५१ ॐ गदापद्मरथाङ्गभृते नमः।

५५२ ॐ निरीहाय नमः।
५५३ ॐ निर्विकल्पाय नमः।
५५४ ॐ चिद्रूपाय नमः।
५५५ ॐ वीतसाध्वसाय नमः।
५५६ ॐ शताननाय नमः।
५५७ ॐ सहस्राक्षाय नमः।
५५८ ॐ शतमूर्तये नमः।
५५९ ॐ घनप्रभाय नमः।
५६० ॐ हृत्पुण्डरीकशयनाय नमः।
५६१ ॐ कठिनाय नमः।
५६२ ॐ द्रवाय नमः।
५६३ ॐ उग्राय नमः।
५६४ ॐ ग्रहपतये नमः।
५६५ ॐ श्रीमते नमः।
५६६ ॐ समर्थाय नमः।
५६७ ॐ अनर्थनाशनाय नमः।
५६८ ॐ अधर्मशत्रवे नमः।
५६९ ॐ रक्षोघ्नाय नमः।
५७० ॐ पुरुहूताय नमः।
५७१ ॐ पुरुष्टुताय नमः।
५७२ ॐ ब्रह्मगर्भाय नमः।
५७३ ॐ बृहद्गर्भाय नमः।
५७४ ॐ धर्मधेनवे नमः।
५७५ ॐ धनागमाय नमः।
५७६ ॐ हिरण्यगर्भाय नमः।
५७७ ॐ ज्योतिष्मते नमः।
५७८ ॐ सुललाटाय नमः।
५७९ ॐ सुविक्रमाय नमः।
५८० ॐ शिवपूजारताय नमः।
५८१ ॐ श्रीमते नमः।
५८२ ॐ भवानीप्रियकृते नमः।
५८३ ॐ वशिने नमः।
५८४ ॐ नराय नमः।
५८५ ॐ नारायणाय नमः।
५८६ ॐ श्यामाय नमः।
५८७ ॐ कपर्दिने नमः।
५८८ ॐ नीललोहिताय नमः।
५८९ ॐ रुद्राय नमः।
५९० ॐ पशुपतये नमः।
५९१ ॐ स्थाणवे नमः।
५९२ ॐ विश्वामित्राय नमः।
५९३ ॐ द्विजेश्वराय नमः।
५९४ ॐ मातामहाय नमः।
५९५ ॐ मातरिश्वने नमः।
५९६ ॐ विरिञ्चाय नमः।
५९७ ॐ विष्टरश्रवसे नमः।
५९८ ॐ सर्वभूतानामक्षोभ्याय नमः।
५९९ ॐ चण्डाय नमः।
६०० ॐ सत्यपराक्रमाय नमः।
६०१ ॐ वालखिल्याय नमः।
६०२ ॐ महाकल्पाय नमः।
६०३ ॐ कल्पवृक्षाय नमः।
६०४ ॐ कलाधराय नमः।
६०५ ॐ निदाघाय नमः।
६०६ ॐ तपनाय नमः।
६०७ ॐ अमोघाय नमः।

६०८ ॐ श्लक्ष्णाय नमः।
६०९ ॐ परबलापहृते नमः।
६१० ॐ कबन्धमथनाय नमः।
६११ ॐ दिव्याय नमः।
६१२ ॐ कम्बुग्रीवशिवप्रियाय नमः।
६१३ ॐ शङ्खाय नमः।
६१४ ॐ अनिलाय नमः।
६१५ ॐ सुनिष्पन्नाय नमः।
६१६ ॐ सुलभाय नमः।
६१७ ॐ शिशिरात्मकाय नमः।
६१८ ॐ असंसृष्टाय नमः।
६१९ ॐ अतिथये नमः।
६२० ॐ शूराय नमः।
६२१ ॐ प्रमाथिने नमः।
६२२ ॐ पापनाशकृते नमः।
६२३ ॐ वसुश्रवसे नमः।
६२४ ॐ कव्यवाहाय नमः।
६२५ ॐ प्रतप्ताय नमः।
६२६ ॐ विश्वभोजनाय नमः।
६२७ ॐ रामाय नमः।
६२८ ॐ नीलोत्पलश्यामाय नमः।
६२९ ॐ ज्ञानस्कन्धाय नमः।
६३० ॐ महाद्युतये नमः।
६३१ ॐ पवित्रपादाय नमः।
६३२ ॐ पापारये नमः।
६३३ ॐ मणिपूराय नमः।
६३४ ॐ नभोगतये नमः।
६३५ ॐ उत्तारणाय नमः।
६३६ ॐ दुष्कृतिघ्ने नमः।
६३७ ॐ दुर्धर्षाय नमः।
६३८ ॐ दुस्सहाय नमः।
६३९ ॐ अभयाय नमः।
६४० ॐ अमृतेशाय नमः।
६४१ ॐ अमृतवपुषे नमः।
६४२ ॐ धर्मिणे नमः।
६४३ ॐ धर्माय नमः।
६४४ ॐ कृपाकराय नमः।
६४५ ॐ भर्गाय नमः।
६४६ ॐ विवस्वते नमः।
६४७ ॐ आदित्याय नमः।
६४८ ॐ योगाचार्याय नमः।
६४९ ॐ दिवस्पतये नमः।
६५० ॐ उदारकीर्तये नमः।
६५१ ॐ उद्योगिने नमः।
६५२ ॐ वाङ्मयाय नमः।
६५३ ॐ सदसन्मयाय नमः।
६५४ ॐ नक्षत्रमालिने नमः।
६५५ ॐ नाकेशाय नमः।
६५६ ॐ स्वाधिष्ठानाय नमः।
६५७ ॐ षडाश्रयाय नमः।
६५८ ॐ चतुर्वर्गफलाय नमः।
६५९ ॐ वर्णिने नमः।
६६० ॐ शक्तित्रयफलाय नमः।
६६१ ॐ निधये नमः।
६६२ ॐ निधानगर्भाय नमः।
६६३ ॐ निर्व्याजाय नमः।

६६४ ॐ गिरीशाय नमः।
६६५ ॐ व्यालमर्दनाय नमः।
६६६ ॐ श्रीवल्लभाय नमः।
६६७ ॐ शिवारम्भाय नमः।
६६८ ॐ शान्तये नमः।
६६९ ॐ भद्राय नमः।
६७० ॐ समञ्जसाय नमः।
६७१ ॐ भूशयाय नमः।
६७२ ॐ भूतिकृते नमः।
६७३ ॐ भूत्यै नमः।
६७४ ॐ भूषणाय नमः।
६७५ ॐ भूतवाहनाय नमः।
६७६ ॐ अकायाय नमः।
६७७ ॐ भक्तकायस्थाय नमः।
६७८ ॐ कालज्ञानिने नमः।
६७९ ॐ महावटवे नमः।
६८० ॐ परार्थवृत्तये नमः।
६८१ ॐ अचलाय नमः।
६८२ ॐ विविक्ताय नमः।
६८३ ॐ श्रुतिसागराय नमः।
६८४ ॐ स्वभावभद्राय नमः।
६८५ ॐ मध्यस्थाय नमः।
६८६ ॐ संसारभयनाशनाय नमः।
६८७ ॐ वेद्याय नमः।
६८८ ॐ वैद्याय नमः।
६८९ ॐ वियद्गोप्त्रे नमः।
६९० ॐ सर्वामरमुनीश्वराय नमः।
६९१ ॐ सुरेन्द्राय नमः।
६९२ ॐ करणाय नमः।
६९३ ॐ कर्मणे नमः।
६९४ ॐ कर्मकृते नमः।
६९५ ॐ कर्मिणे नमः।
६९६ ॐ अधोक्षजाय नमः।
६९७ ॐ ध्येयाय नमः।
६९८ ॐ धुर्याय नमः।
७९९ ॐ धराधीशाय नमः।
७०० ॐ संकल्पाय नमः।
७०१ ॐ शर्वरीपतये नमः।
७०२ ॐ परमार्थगुरवे नमः।
७०३ ॐ वृद्धाय नमः।
७०४ ॐ शुचये नमः।
७०५ ॐ आश्रितवत्सलाय नमः।
७०६ ॐ विष्णवे नमः।
७०७ ॐ जिष्णवे नमः।
७०८ ॐ विभवे नमः।
७०९ ॐ वन्द्याय नमः।
७१० ॐ यज्ञेशाय नमः।
७११ ॐ यज्ञपालकाय नमः।
७१२ ॐ प्रभविष्णवे नमः।
७१३ ॐ ग्रसिष्णवे नमः।
७१४ ॐ लोकात्मने नमः।
७१५ ॐ लोकभावनाय नमः।
७१६ ॐ केशवाय नमः।
७१७ ॐ केशिघ्ने नमः।
७१८ ॐ काव्याय नमः।
७१९ ॐ कवये नमः।

७२० ॐ कारणकारणाय नमः।
७२१ ॐ कालकर्त्रे नमः।
७२२ ॐ कालशेषाय नमः।
७२३ ॐ वासुदेवाय नमः।
७२४ ॐ पुरुष्टुताय नमः।
७२५ ॐ आदिकर्त्रे नमः।
७२६ ॐ वराहाय नमः।
७२७ ॐ माधवाय नमः।
७२८ ॐ मधुसूदनाय नमः।
७२९ ॐ नारायणाय नमः।
७३० ॐ नराय नमः।
७३१ ॐ हंसाय नमः।
७३२ ॐ विष्वक्सेनाय नमः।
७३३ ॐ जनार्दनाय नमः।
७३४ ॐ विश्वकर्त्रे नमः।
७३५ ॐ महायज्ञाय नमः।
७३६ ॐ ज्योतिष्मते नमः।
७३७ ॐ पुरुषोत्तमाय नमः।
७३८ ॐ वैकुण्ठाय नमः।
७३९ ॐ पुण्डरीकाक्षाय नमः।
७४० ॐ कृष्णाय नमः।
७४१ ॐ सूर्याय नमः।
७४२ ॐ सुरार्चिताय नमः।
७४३ ॐ नारसिंहाय नमः।
७४४ ॐ महाभीमाय नमः।
७४५ ॐ वक्रदंष्ट्राय नमः।
७४६ ॐ नखायुधाय नमः।
७४७ ॐ आदिदेवाय नमः।
७४८ ॐ जगत्कर्त्रे नमः।
७४९ ॐ योगीशाय नमः।
७५० ॐ गरुडध्वजाय नमः।
७५१ ॐ गोविन्दाय नमः।
७५२ ॐ गोपतये नमः।
७५३ ॐ गोप्त्रे नमः।
७५४ ॐ भूपतये नमः।
७५५ ॐ भुवनेश्वराय नमः।
७५६ ॐ पद्मनाभाय नमः।
७५७ ॐ हृषीकेशाय नमः।
७५८ ॐ धात्रे नमः।
७५९ ॐ दामोदराय नमः।
७६० ॐ प्रभवे नमः।
७६१ ॐ त्रिविक्रमाय नमः।
७६२ ॐ त्रिलोकेशाय नमः।
७६३ ॐ ब्रह्मेशाय नमः।
७६४ ॐ प्रीतिवर्धनाय नमः।
७६५ ॐ वामनाय नमः।
७६६ ॐ दुष्टदमनाय नमः।
७६७ ॐ गोविन्दाय नमः।
७६८ ॐ गोपवल्लभाय नमः।
७६९ ॐ भक्तप्रियाय नमः।
७७० ॐ अच्युताय नमः।
७७१ ॐ सत्याय नमः।
७७२ ॐ सत्यकीर्तये नमः।
७७३ ॐ धृत्यै नमः।
७७४ ॐ स्मृत्यै नमः।
७७५ ॐ कारुण्याय नमः।

७७६ ॐ करुणाय नमः।
७७७ ॐ व्यासाय नमः।
७७८ ॐ पापघ्ने नमः।
७७९ ॐ शान्तिवर्धनाय नमः।
७८० ॐ संन्यासिने नमः।
७८१ ॐ शास्त्रतत्त्वज्ञाय नमः।
७८२ ॐ मन्दराद्रिनिकेतनाय नमः।
७८३ ॐ बदरीनिलयाय नमः।
७८४ ॐ शान्ताय नमः।
७८५ ॐ तपस्विने नमः।
७८६ ॐ वैद्युतप्रभाय नमः।
७८७ ॐ भूतावासाय नमः।
७८८ ॐ गुहावासाय नमः।
७८९ ॐ श्रीनिवासाय नमः।
७९० ॐ श्रियः पतये नमः।
७९१ ॐ तपोवासाय नमः।
७९२ ॐ मुदावासाय नमः।
७९३ ॐ सत्यवासाय नमः।
७९४ ॐ सनातनाय नमः।
७९५ ॐ पुरुषाय नमः।
७९६ ॐ पुष्कराय नमः।
७९७ ॐ पुण्याय नमः।
७९८ ॐ पुष्कराक्षाय नमः।
७९९ ॐ महेश्वराय नमः।
८०० ॐ पूर्णमूर्तये नमः।
८०१ ॐ पुराणज्ञाय नमः।
८०२ ॐ पुण्यदाय नमः।
८०३ ॐ प्रीतिवर्धनाय नमः।
८०४ ॐ शङ्खिने नमः।
८०५ ॐ चक्रिणे नमः।
८०६ ॐ गदिने नमः।
८०७ ॐ शार्ङ्गिणे नमः।
८०८ ॐ लाङ्गलिने नमः।
८०९ ॐ मुसलिने नमः।
८१० ॐ हलिने नमः।
८११ ॐ किरीटिने नमः।
८१२ ॐ कुण्डलिने नमः।
८१३ ॐ हारिणे नमः।
८१४ ॐ मेखलिने नमः।
८१५ ॐ कवचिने नमः।
८१६ ॐ ध्वजिने नमः।
८१७ ॐ योद्ध्रे नमः।
८१८ ॐ जेत्रे नमः।
८१९ ॐ महावीर्याय नमः।
८२० ॐ शत्रुजिते नमः।
८२१ ॐ शत्रुतापनाय नमः।
८२२ ॐ शास्त्रे नमः।
८२३ ॐ शास्त्रकराय नमः।
८२४ ॐ शास्त्राय नमः।
८२५ ॐ शङ्कराय नमः।
८२६ ॐ शङ्करस्तुताय नमः।
८२७ ॐ सारथये नमः।
८२८ ॐ सात्त्विकाय नमः।
८२९ ॐ स्वामिने नमः।
८३० ॐ सामवेदप्रियाय नमः।
८३१ ॐ समाय नमः।

८३२ ॐ पवनाय नमः।
८३३ ॐ संहताय नमः।
८३४ ॐ शक्तये नमः।
८३५ ॐ सम्पूर्णाङ्गाय नमः।
८३६ ॐ समृद्धिमते नमः।
८३७ ॐ स्वर्गदाय नमः।
८३८ ॐ कामदाय नमः।
८३९ ॐ श्रीदाय नमः।
८४० ॐ कीर्तिदाय नमः।
८४१ ॐ अकीर्तिनाशनाय नमः।
८४२ ॐ मोक्षदाय नमः।
८४३ ॐ पुण्डरीकाक्षाय नमः।
८४४ ॐ क्षीराब्धिकृतकेतनाय नमः।
८४५ ॐ सर्वात्मने नमः।
८४६ ॐ सर्वलोकेशाय नमः।
८४७ ॐ प्रेरकाय नमः।
८४८ ॐ पापनाशनाय नमः।
८४९ ॐ सर्वव्यापिने नमः।
८५० ॐ जगन्नाथाय नमः।
८५१ ॐ सर्वलोकमहेश्वराय नमः।
८५२ ॐ सर्गस्थित्यन्तकृते नमः।
८५३ ॐ देवाय नमः।
८५४ ॐ सर्वलोकसुखावहाय नमः।
८५५ ॐ अक्षय्याय नमः।
८५६ ॐ शाश्वताय नमः।
८५७ ॐ अनन्ताय नमः।
८५८ ॐ क्षयवृद्धिविवर्जिताय नमः।
८५९ ॐ निर्लेपाय नमः।
८६० ॐ निर्गुणाय नमः।
८६१ ॐ सूक्ष्माय नमः।
८६२ ॐ निर्विकाराय नमः।
८६३ ॐ निरञ्जनाय नमः।
८६४ ॐ सर्वोपाधिविनिर्मुक्ताय नमः।
८६५ ॐ सत्तामात्रव्यवस्थिताय नमः।
८६६ ॐ अधिकारिणे नमः।
८६७ ॐ विभवे नमः।
८६८ ॐ नित्याय नमः।
८६९ ॐ परमात्मने नमः।
८७० ॐ सनातनाय नमः।
८७१ ॐ अचलाय नमः।
८७२ ॐ निर्मलाय नमः।
८७३ ॐ व्यापिने नमः।
८७४ ॐ नित्यतृप्ताय नमः।
८७५ ॐ निराश्रयाय नमः।
८७६ ॐ श्यामाय नमः।
८७७ ॐ यूने नमः।
८७८ ॐ लोहिताक्षाय नमः।
८७९ ॐ दीप्तास्याय नमः।
८८० ॐ मितभाषणाय नमः।
८८१ ॐ आजानुबाहवे नमः।
८८२ ॐ सुमुखाय नमः।
८८३ ॐ सिंहस्कन्धाय नमः।
८८४ ॐ महाभुजाय नमः।
८८५ ॐ सत्यवते नमः।
८८६ ॐ गुणसम्पन्नाय नमः।
८८७ ॐ स्वयंतेजसे नमः।

८८८ ॐ सुदीप्तिमते नमः।
८८९ ॐ कालात्मने नमः।
८९० ॐ भगवते नमः
८९१ ॐ कालाय नमः।
८९२ ॐ कालचक्रप्रवर्तकाय नमः।
८९३ ॐ नारायणाय नमः।
८९४ ॐ परस्मै ज्योतिषे नमः।
८९५ ॐ परमात्मने नमः।
८९६ ॐ सनातनाय नमः।
८९७ ॐ विश्वसृजे नमः।
८९८ ॐ विश्वगोप्त्रे नमः।
८९९ ॐ विश्वभोक्त्रे नमः।
९०० ॐ शाश्वताय नमः।
९०१ ॐ विश्वेश्वराय नमः।
९०२ ॐ विश्वमूर्तये नमः।
९०३ ॐ विश्वात्मने नमः।
९०४ ॐ विश्वभावनाय नमः।
९०५ ॐ सर्वभूतसुहृदे नमः।
९०६ ॐ शान्ताय नमः।
९०७ ॐ सर्वभूतानुकम्पनाय नमः।
९०८ ॐ सर्वेश्वरेश्वराय नमः।
९०९ ॐ सर्वस्मै नमः।
९१० ॐ श्रीमते नमः।
९११ ॐ आश्रितवत्सलाय नमः।
९१२ ॐ सर्वगाय नमः।
९१३ ॐ सर्वभूतेशाय नमः।
९१४ ॐ सर्वभूताशयस्थिताय नमः।
९१५ ॐ अभ्यन्तरस्थाय नमः।
९१६ ॐ तमसश्छेत्त्रे नमः।
९१७ ॐ नारायणाय नमः।
९१८ ॐ परस्मै नमः।
९१९ ॐ अनादिनिधनाय नमः।
९२० ॐ स्त्रष्ट्रे नमः।
९२१ ॐ प्रजापतिपतये नमः।
९२२ ॐ हरये नमः।
९२३ ॐ नरसिंहाय नमः।
९२४ ॐ हृषीकेशाय नमः।
९२५ ॐ सर्वात्मने नमः।
९२६ ॐ सर्वदृशे नमः।
९२७ ॐ वशिने नमः।
९२८ ॐ जगतस्तस्थुषाय नमः।
९२९ ॐ प्रभवे नमः।
९३० ॐ नेत्रे नमः।
९३१ ॐ सनातनाय नमः।
९३२ ॐ कर्त्रे नमः।
९३३ ॐ धात्रे नमः।
९३४ ॐ विधात्रे नमः।
९३५ ॐ सर्वेषां प्रभवे नमः।
९३६ ॐ ईश्वराय नमः।
९३७ ॐ सहस्त्रमूर्तये नमः।
९३८ ॐ विश्वात्मने नमः।
९३९ ॐ विष्णवे नमः।
९४० ॐ विश्वदृशे नमः।
९४१ ॐ अव्ययाय नमः।
९४२ ॐ पुराणपुरुषाय नमः।
९४३ ॐ स्त्रष्ट्रे नमः।

१४४ ॐ सहस्राक्षाय नमः।
१४५ ॐ सहस्रपदे नमः।
१४६ ॐ तत्त्वाय नमः।
१४७ ॐ नारायणाय नमः।
१४८ ॐ विष्णवे नमः।
१४९ ॐ वासुदेवाय नमः।
१५० ॐ सनातनाय नमः।
१५१ ॐ परमात्मने नमः।
१५२ ॐ परस्मै ब्रह्मणे नमः।
१५३ ॐ सच्चिदानन्दविग्रहाय नमः।
१५४ ॐ परस्मै ज्योतिषे नमः।
१५५ ॐ परस्मै धाम्ने नमः।
१५६ ॐ पराकाशाय नमः।
१५७ ॐ परात्परस्मै नमः।
१५८ ॐ अच्युताय नमः।
१५९ ॐ पुरुषाय नमः।
१६० ॐ कृष्णाय नमः।
१६१ ॐ शाश्वताय नमः।
१६२ ॐ शिवाय नमः।
१६३ ॐ ईश्वराय नमः।
१६४ ॐ नित्याय नमः।
१६५ ॐ सर्वगताय नमः।
१६६ ॐ स्थाणवे नमः।
१६७ ॐ उग्राय नमः।
१६८ ॐ साक्षिणे नमः।
१६९ ॐ प्रजापतये नमः।
१७० ॐ हिरण्यगर्भाय नमः।
१७१ ॐ सवित्रे नमः।
१७२ ॐ लोककृते नमः।
१७३ ॐ लोकभृते नमः।
१७४ ॐ विभवे नमः।
१७५ ॐ रामाय नमः।
१७६ ॐ श्रीमते नमः।
१७७ ॐ महाविष्णवे नमः।
१७८ ॐ जिष्णवे नमः।
१७९ ॐ देवहितावहाय नमः।
१८० ॐ तत्त्वात्मने नमः।
१८१ ॐ तारकाय नमः।
१८२ ॐ ब्रह्मणे नमः।
१८३ ॐ शाश्वताय नमः।
१८४ ॐ सर्वसिद्धिदाय नमः।
१८५ ॐ अकारवाच्याय नमः।
१८६ ॐ भगवते नमः।
१८७ ॐ श्रिये नमः।
१८८ ॐ भूलीलापतये नमः।
१८९ ॐ पुंसे नमः।
१९० ॐ सर्वलोकेश्वराय नमः।
१९१ ॐ श्रीमते नमः।
१९२ ॐ सर्वज्ञाय नमः।
१९३ ॐ सर्वतोमुखाय नमः।
१९४ ॐ स्वामिने नमः।
१९५ ॐ सुशीलाय नमः।
१९६ ॐ सुलभाय नमः।
१९७ ॐ सर्वज्ञाय नमः।
१९८ ॐ सर्वशक्तिमते नमः।
१९९ ॐ नित्याय नमः।

१००० ॐ सम्पूर्णकामाय नमः।
१००१ ॐ नैसर्गिकसुहृदे नमः।
१००२ ॐ सुखिने नमः।
१००३ ॐ कृपापीयूषजलधये नमः।
१००४ ॐ सर्वदेहिनां शरण्याय नमः।
१००५ ॐ श्रीमते नमः।
१००६ ॐ नारायणाय नमः।
१००७ ॐ स्वामिने नमः।
१००८ ॐ जगतां पत्ये नमः।
१००९ ॐ ईश्वराय नमः।
१०१० ॐ श्रीशाय नमः।
१०११ ॐ भूतानां शरण्याय नमः।
१०१२ ॐ संश्रिताभीष्टदायकाय नमः।
१०१३ ॐ अनन्ताय नमः।
१०१४ ॐ श्रीपतये नमः।
१०१५ ॐ रामाय नमः।
१०१६ ॐ गुणभृते नमः।
१०१७ ॐ निर्गुणाय नमः।
१०१८ ॐ महते नमः।

॥ इति श्रीआनन्दरामायणे वाल्मीकीये श्रीरामसहस्रनामावलिः सम्पूर्णा ॥

॥ श्रीकृष्णाय नमः ॥

# श्रीकृष्णसहस्त्रनामस्तोत्रम्

ध्यानम्

शिखिमुकुटविशेषं नीलपद्माङ्गदेशं
विधुमुखकृतकेशं कौस्तुभापीतवेशम्।
मधुररवकलेशं शं भजे भ्रातृशेषं
व्रजजनवनितेशं माधवं राधिकेशम्॥*

स्तोत्रम्

कृष्णः श्रीवल्लभः शार्ङ्गी विष्वक्सेनः स्वसिद्धिदः।
क्षीरोदधामा व्यूहेशः शेषशायी जगन्मयः॥ १ ॥
भक्तिगम्यस्त्रयीमूर्तिर्भारार्तवसुधास्तुतः।
देवदेवो दयासिन्धुर्देवो देवशिखामणिः॥ २ ॥
सुखभावः सुखाधारो मुकुन्दो मुदिताशयः।
अविक्रियः क्रियामूर्तिरध्यात्मस्वस्वरूपवान्॥ ३ ॥

---

* जिनके मस्तकपर मोरपंखका मुकुट विशेष शोभा देता है, जिनका अङ्गदेश (सम्पूर्ण शरीर) नील कमलके समान श्याम है, चन्द्रमाके समान मनोहर मुखपर कुञ्चित केश सुशोभित हैं, कौस्तुभमणिकी सुनहरी आभासे जिनका वेश कुछ पीतवर्णका दिखायी देता है (अथवा जो पीताम्बरधारी हैं) जो मीठी धुनमें मुरली बजा रहे हैं, कल्याणस्वरूप हैं, शेषावतार बलराम जिनके भाई हैं तथा जो व्रजवनिताओंके वल्लभ हैं, उन राधिकाके प्राणेश्वर माधवका मैं भजन (चिन्तन) करता हूँ।

शिष्टाभिलक्ष्यो भूतात्मा धर्मत्राणार्थचेष्टितः।
अन्तर्यामी कलारूपः कालावयवसाक्षिकः॥ ४ ॥
वसुधायासहरणो नारदप्रेरणोन्मुखः।
प्रभूष्णुर्नारदोद्गीतो लोकरक्षापरायणः॥ ५ ॥
रौहिणेयकृतानन्दो योगज्ञाननियोजकः।
महागुहान्तर्निक्षिप्तः पुराणवपुरात्मवान्॥ ६ ॥
शूरवंशैकधीः शौरिः कंसशंकाविषादकृत्।
वसुदेवोल्लसच्छक्तिर्देवक्यष्टमगर्भगः॥ ७ ॥
वसुदेवसुतः श्रीमान् देवकीनन्दनो हरिः।
आश्चर्यबालः श्रीवत्सलक्ष्मवक्षाश्चतुर्भुजः॥ ८ ॥
स्वभावोत्कृष्टसद्भावः कृष्णाष्टम्यन्तसम्भवः।
प्राजापत्यर्क्षसम्भूतो निशीथसमयोदितः॥ ९ ॥
शंखचक्रगदापद्मपाणिः पद्मनिभेक्षणः।
किरीटी कौस्तुभोरस्कः स्फुरन्मकरकुण्डलः॥ १० ॥
पीतवासा घनश्यामः कुञ्चिताञ्चितकुन्तलः।
सुव्यक्तव्यक्ताभरणः सूतिकागृहभूषणः॥ ११ ॥
कारागारान्धकारघ्नः पितृप्राग्जन्मसूचकः।
वसुदेवस्तुतः स्तोत्रं तापत्रयनिवारणः॥ १२ ॥
निरवद्यः क्रियामूर्तिर्न्यायवाक्यनियोजकः।
अदृष्टचेष्टः कूटस्थो धृतलौकिकविग्रहः॥ १३ ॥
महर्षिमानसोल्लासो महीमङ्गलदायकः।
संतोषितसुरव्रातः साधुचित्तप्रसादकः॥ १४ ॥

जनकोपायनिर्देष्टा देवकीनयनोत्सवः ।
पितृपाणिपरिष्कारो मोहितागाररक्षकः ॥ १५ ॥
स्वशक्त्युद्धाटिताशेषकपाटः पितृवाहकः ।
शेषोरगफणाच्छत्रः शेषोक्ताख्यासहस्रकः ॥ १६ ॥
यमुनापूरविध्वंसी स्वभासोद्भासितव्रजः ।
कृतात्मविद्याविन्यासो योगमायाग्रसम्भवः ॥ १७ ॥
दुर्गानिवेदितोद्भावो यशोदातल्पशायकः ।
नन्दगोपोत्सवस्फूर्तिर्व्रजानन्दकरोदयः ॥ १८ ॥
सुजातजातकर्मश्रीर्गोपीभद्रोक्तिनिर्वृतः ।
अलीकनिद्रोपगमः पूतनास्तनपीडनः ॥ १९ ॥
स्तन्यात्तपूतनाप्राणः पूतनाक्रोशकारकः ।
विन्यस्तरक्षागोधूलिर्यशोदाकरलालितः ॥ २० ॥
नन्दाघ्रातशिरोमध्यः पूतनासुगतिप्रदः ।
बालः पर्यङ्कनिद्रालुर्मुखार्पितपदाङ्गुलिः ॥ २१ ॥
अञ्जनस्निग्धनयनः पर्यायाङ्कुरितस्मितः ।
लीलाक्षस्तरलालोकः शकटासुरभञ्जनः ॥ २२ ॥
द्विजोदितस्वस्त्ययनो मन्त्रपूतजलाप्लुतः ।
यशोदोत्सङ्गपर्यङ्को यशोदामुखवीक्षकः ॥ २३ ॥
यशोदास्तन्यमुदितस्तृणावर्तादिदुःसहः ।
तृणावर्तासुरध्वंसी मातृविस्मयकारकः ॥ २४ ॥
प्रशस्तनामकरणो जानुचंक्रमणोत्सुकः ।
व्यालम्बिचूलिकारत्नो घोषगोपः प्रहर्षणः ॥ २५ ॥

स्वमुखप्रतिबिम्बार्थी ग्रीवाव्याघ्रनखोज्ज्वलः।
पङ्कानुलेपरुचिरो मांसलोरुकटीतटः॥ २६॥
घृष्टजानुकरद्वन्द्वः प्रतिबिम्बानुकारकृत्।
अव्यक्तवर्णवाग्वृत्तिः स्मितलक्ष्यरदोद्गमः॥ २७॥
धात्रीकरसमालम्बी प्रस्खलच्चित्रचंक्रमः।
अनुरूपवयस्याढ्यश्चारुकौमारचापलः॥ २८॥
वत्सपुच्छसमाकृष्टो वत्सपुच्छविकर्षणः।
विस्मारितान्यव्यापारो गोपगोपीमुदावहः॥ २९॥
अकालवत्सनिर्मोक्ता व्रजव्याक्रोशसुस्मितः।
नवनीतमहाचोरो दारकाहारदायकः॥ ३०॥
पीठोलूखलसोपानः क्षीरभाण्डविभेदनः।
शिक्यभाण्डसमाकर्षी ध्वान्तागारप्रवेशकृत्॥ ३१॥
भूषारत्नप्रकाशाढ्यो गोप्युपालम्भभर्त्सितः।
परागधूसराकारो मृद्भक्षणकृतेक्षणः॥ ३२॥
बालोक्तमृत्कथारम्भो मित्रान्तर्गूढविग्रहः।
कृतसंत्राससलोलाक्षो जननीप्रत्ययावहः॥ ३३॥
मातृदृश्यात्तवदनो वक्त्रलक्ष्यचराचरः।
यशोदालालितस्वात्मा स्वयं स्वाच्छन्द्यमोहनः॥ ३४॥
सवित्रीस्नेहसंश्लिष्टः सवित्रीस्तनलोलुपः।
नवनीतार्थनाप्रह्वो नवनीतमहाशनः॥ ३५॥
मृषाकोपप्रकम्पोष्ठो गोष्ठाङ्गणविलोकनः।
दधिमन्थघटीभेत्ता किङ्किणीक्वाणसूचितः॥ ३६॥

हैयङ्गवीनरसिको मृषाश्रुश्चौर्यशङ्कितः।
जननीश्रमविज्ञाता दामबन्धनियन्त्रितः॥ ३७॥
दामाकल्पश्चलापाङ्गो गाढोलूखलबन्धनः।
आकृष्टोलूखलोऽनन्तः कुबेरसुतशापवित्॥ ३८॥
नारदोक्तिपरामर्शी यमलार्जुनभञ्जनः।
धनदात्मजसंघुष्टो नन्दमोचितबन्धनः॥ ३९॥
बालकोद्गीतनिरतो बाहुक्षेपोदितप्रियः।
आत्मज्ञो मित्रवशगो गोपीगीतगुणोदयः॥ ४०॥
प्रस्थानशकटारूढो वृन्दावनकृतालयः।
गोवत्सपालनैकाग्रो नानाक्रीडापरिच्छदः॥ ४१॥
क्षेपणीक्षेपणः प्रीतो वेणुवाद्यविशारदः।
वृषवत्सानुकरणो वृषध्वानविडम्बनः॥ ४२॥
नियुद्धलीलासंहृष्टः कूजानुकृतकोकिलः।
उपात्तहंसगमनः सर्वजन्तुरुतानुकृत्॥ ४३॥
भृङ्गानुकारी दध्यन्नचोरो वत्सपुरस्सरः।
बली बकासुरग्राही बकतालुप्रदाहकः॥ ४४॥ 210
भीतगोपार्भकाहूतो बकचञ्चुविदारणः।
बकासुरारिर्गोपालो बालो बालाद्भुतावहः॥ ४५॥
बलभद्रसमाश्लिष्टः कृतक्रीडानिलायनः।
क्रीडासेतुनिधानज्ञः प्लवङ्गोत्प्लवनोऽद्भुतः॥ ४६॥
कन्दुकक्रीडनो लुप्तनन्दादिभववेदनः।
सुमनोऽलंकृतशिराः स्वादुस्निग्धान्नशिक्यभृत्॥ ४७॥

गुञ्जाप्रालम्बनच्छन्नः पिञ्छैरलकवेषकृत्।
वन्याशनप्रियः शृङ्गरवाकारितवत्सकः ॥ ४८ ॥
मनोज्ञपल्लवोत्तंसपुष्पस्वेच्छात्तषट्पदः ।
मञ्जुशिञ्जितमञ्जीरचरणः करकङ्कणः ॥ ४९ ॥
अन्योन्यशासनः क्रीडापटुः परमकैतवः ।
प्रतिध्वानप्रमुदितः शाखाचतुरचंक्रमः ॥ ५० ॥
अघदानवसंहर्ता व्रजविघ्नविनाशनः ।
व्रजसञ्जीवनः श्रेयोनिधिर्दानवमुक्तिदः ॥ ५१ ॥
कालिन्दीपुलिनासीनः सहभुक्तव्रजार्भकः ।
कक्षाजठरविन्यस्तवेणुर्वल्लवचेष्टितः ॥ ५२ ॥
भुजसन्ध्यन्तरन्यस्तशृङ्गवेत्रः शुचिस्मितः ।
वामपाणिस्थदध्यन्नकवलः कलभाषणः ॥ ५३ ॥
अङ्गुल्यन्तरविन्यस्तफलः परमपावनः ।
अदृश्यतर्णकान्वेषी वल्लवार्भकभीतिहा ॥ ५४ ॥
अदृष्टवत्सपव्रातो ब्रह्मविज्ञातवैभवः ।
गोवत्सवत्सपान्वेषी विराट्पुरुषविग्रहः ॥ ५५ ॥
स्वसंकल्पानुरूपार्थो वत्सवत्सपरूपधृक् ।
यथावत्सक्रियारूपो यथास्थाननिवेशनः ॥ ५६ ॥
यथाव्रजार्भकाकारो गोगोपीस्तन्यपः सुखी ।
चिराद्बलो हितो दान्तो ब्रह्मविज्ञातवैभवः ॥ ५७ ॥
विचित्रशक्तिर्व्यालीनः सृष्टगोवत्सवत्सपः ।
ब्रह्मत्रपाकरो धातृस्तुतः सर्वार्थसाधकः ॥ ५८ ॥

ब्रह्म ब्रह्ममयोऽव्यक्तस्तेजोरूपः सुखात्मकः।
निरुक्तं व्याकृतिर्व्यक्तो निरालम्बनभावनः॥ ५९ ॥
प्रभविष्णुरतन्त्रीको देवपक्षार्थरूपधृक्।
अकामः सर्ववेदादिरणीयः स्थूलरूपवान्॥ ६० ॥
व्यापी व्याप्यः कृपाकर्ता विचित्राचारसम्मतः।
छन्दोमयः प्रधानात्मा मूर्तामूर्तिद्वयाकृतिः॥ ६१ ॥
अनेकमूर्तिरक्रोधः परः प्रकृतिरक्रमः।
सकलावरणोपेतः सर्वदेवो महेश्वरः॥ ६२ ॥
महाप्रभावनः पूर्ववत्सवत्सपदर्शकः।
कृष्णयादवगोपालो गोपालोकनहर्षितः॥ ६३ ॥
स्मितेक्षाहर्षितब्रह्मा भक्तवत्सलवाक्प्रियः।
ब्रह्मानन्दाश्रुधौतांघ्रिर्लीलावैचित्र्यकोविदः॥ ६४ ॥
बलभद्रैकहृदयो नामाकारितगोकुलः।
गोपालबालको भव्यो रज्जुयज्ञोपवीतवान्॥ ६५ ॥
वृक्षच्छायाहताशान्तिर्गोपोत्सङ्गोपबर्हणः।
गोपसंवाहितपदो गोपव्यजनवीजितः॥ ६६ ॥
गोपगानसुखोन्निद्रः श्रीदामार्जितसौहृदः।
सुनन्दसुहृदेकात्मा सुबलप्राणरञ्जनः॥ ६७ ॥
तालीवनकृतक्रीडो बलपातितधेनुकः।
गोपीसौभाग्यसम्भाव्यो गोधूलिच्छुरितालकः॥ ६८ ॥
गोपीविरहसंतप्तो गोपिकाकृतमज्जनः।
प्रलम्बबाहुरुत्फुल्लपुण्डरीकावतंसकः॥ ६९ ॥

विलासललितस्मेरगर्भलीलावलोकनः ।
स्रग्भूषणानुलेपाढ्यो जनन्युपहृतान्नभुक् ॥ ७० ॥
वरशय्याशयो राधाप्रेमसल्लापनिर्वृतः ।
यमुनातटसंचारी विषार्तव्रजहर्षदः ॥ ७१ ॥
कालियक्रोधजनकः वृद्धाहिकुलवेष्टितः ।
कालियाहिफणारङ्गनटः कालियमर्दनः ॥ ७२ ॥
नागपत्नीस्तुतिप्रीतो नानावेषसमृद्धिकृत् ।
अविषाक्तदृगात्मेशः स्वदृगात्मास्तुतिप्रियः ॥ ७३ ॥
सर्वेश्वरः सर्वगुणः प्रसिद्धः सर्वसात्वतः ।
अकुण्ठधामा चन्द्रार्कदृष्टिराकाशनिर्मलः ॥ ७४ ॥
अनिर्देश्यगतिर्नागवनितापतिभैक्षदः ।
स्वांघ्रिमुद्राङ्कनागेन्द्रमूर्धा कालियसंस्तुतः ॥ ७५ ॥
अभयो विश्वतश्चक्षुः स्तुतोत्तमगुणः प्रभुः ।
अहमात्मा मरुत्प्राणः परमात्मा द्युशीर्षवान् ॥ ७६ ॥
नागोपायनहृष्टात्मा ह्रदोत्सारितकालियः ।
बलभद्रसुखालापो गोपालिङ्गननिर्वृतः ॥ ७७ ॥
दावाग्निभीतगोपालगोप्ता दावाग्निनाशनः ।
नयनाच्छादनक्रीडालम्पटो नृपचेष्टितः ॥ ७८ ॥
काकपक्षधरः सौम्यो बलवाहककेलिमान् ।
बलघातितदुर्धर्षप्रलम्बो बलवत्सलः ॥ ७९ ॥
मुञ्जाटव्यग्निशमनः प्रावृट्कालविनोदवान् ।
शिलान्यस्तान्नभृद्दैत्यसंहर्ता शाद्वलासनः ॥ ८० ॥

सदाप्तगोपिकोद्गीतः कर्णिकारावतंसकः ।
नटवेषधरः पद्ममालाङ्को गोपिकावृतः ॥ ८१ ॥
गोपीमनोहरापाङ्गो वेणुवादनतत्परः ।
विन्यस्तवदनाम्भोजश्चारुशब्दकृताननः ॥ ८२ ॥
बिम्बाधरार्पितदारुवेणुर्विश्वविमोहनः ।
व्रजसंवर्णितः श्राव्यवेणुनादश्रुतिप्रियः ॥ ८३ ॥
गोगोपगोपीजन्मेप्सुर्ब्रह्मेन्द्राद्यभिवन्दितः ।
गीतस्नुतिसरित्पूरो नादनर्तितबर्हिणः ॥ ८४ ॥
रागपल्लवितस्थाणुर्गीतानमितपादपः ।
विस्मारिततृणग्रासमृगो मृगविलोभितः ॥ ८५ ॥
व्याघ्रादिहिंस्रसहजवैरहर्ता सुगायनः ।
गाढोदीरितगोवृन्दः प्रेमोत्कर्णिततर्णकः ॥ ८६ ॥
निष्पन्दयानब्रह्मादिवीक्षितो विश्ववन्दितः ।
शाखोत्कर्णशकुन्तौघश्छत्रायितवलाहकः ॥ ८७ ॥
प्रसन्नः परमानन्दश्चित्रायितचराचरः ।
गोपिकामदनो गोपीकुचकुङ्कुममुद्रितः ॥ ८८ ॥
गोपकन्याजलक्रीडाहृष्टो गोप्यंशुकापहृत् ।
स्कन्धारोपितगोपस्त्रीवासाः कुन्दनिभस्मितः ॥ ८९ ॥
गोपीनेत्रोत्पलशशी गोपिकायाचितांशुकः ।
गोपीनमस्क्रियादेष्टा गोप्येककरवन्दितः ॥ ९० ॥
गोप्यञ्जलिविशेषार्थी गोपक्रीडाविलोभितः ।
शान्तवासस्फुरद्गोपीकृताञ्जलिरघापहः ॥ ९१ ॥

गोपीकेलिविलासार्थी गोपीसम्पूर्णकामदः।
गोपस्त्रीवस्त्रदो गोपीचित्तचोरः कुतूहली॥ ९२ ॥
वृन्दावनप्रियो गोपबन्धुर्यज्वान्नयाचिता।
यज्ञेशो यज्ञभावज्ञो यज्ञपत्न्यभिवाञ्छितः॥ ९३ ॥
मुनिपत्नीवितीर्णान्नतृप्तो मुनिवधूप्रियः।
द्विजपत्न्यभिभावज्ञो द्विजपत्नीवरप्रदः॥ ९४ ॥
प्रतिरुद्धसतीमोक्षप्रदो द्विजविमोहितः।
मुनिज्ञानप्रदो यज्वस्तुतो वासवयागवित्॥ ९५ ॥
पितृप्रोक्तक्रियारूपशक्रयागनिवारणः।
शक्राऽमर्षकरः शक्रवृष्टिप्रशमनोन्मुखः॥ ९६ ॥
गोवर्धनधरो गोपगोवृन्दत्राणतत्परः।
गोवर्धनगिरिछत्रचण्डदण्डभुजार्गलः॥ ९७ ॥
सप्ताहविधृताद्रीन्द्रो मेघवाहनगर्वहा।
भुजाग्रोपरिविन्यस्तक्ष्माधरक्ष्माभृदच्युतः॥ ९८ ॥
स्वस्थानस्थापितगिरिर्गोपीदध्यक्षतार्चितः।
सुमनः सुमनोवृष्टिहृष्टो वासववन्दितः॥ ९९ ॥
कामधेनुपयःपूराभिषिक्तः सुरभिस्तुतः।
धरांघ्रिरोषधीरोमा धर्मगोप्ता मनोमयः॥ १०० ॥
ज्ञानयज्ञप्रियः शास्त्रनेत्रः सर्वार्थसारथिः।
ऐरावतकरानीतवियद्गङ्गाप्लुतो विभुः॥ १०१ ॥
ब्रह्माभिषिक्तो गोगोप्ता सर्वलोकशुभंकरः।
सर्ववेदमयो मग्ननन्दान्वेषिपितृप्रियः॥ १०२ ॥

वरुणोदीरितात्मेक्षाकौतुको वरुणार्चितः।
वरुणानीतजनको गोपज्ञातात्मवैभवः॥ १०३॥
स्वर्लोकालोकसंहृष्टगोपवर्गत्रिवर्गदः।
ब्रह्महृद्गोपितो गोपद्रष्टा ब्रह्मपदप्रदः॥ १०४॥
शरच्चन्द्रविहारोत्कः श्रीपतिर्वशकः क्षमः।
भयापहो भर्तृरुद्धगोपिकाध्यानगोचरः॥ १०५॥
गोपिकानयनास्वाद्यो गोपीनर्मोक्तिनिर्वृतः।
गोपिकामानहरणो गोपिकाशतयूथपः॥ १०६॥
वैजयन्तीस्रगाकल्पो गोपिकामानवर्धनः।
गोपकान्तासुनिर्देष्टा कान्तो मन्मथमन्मथः॥ १०७॥
स्वात्मास्यदत्ततताम्बूलः फलितोत्कृष्टयौवनः।
वल्लवीस्तनसक्ताक्षो वल्लवीप्रेमचालितः॥ १०८॥
गोपीचेलांचलासीनो गोपीनेत्राब्जषट्पदः।
रासक्रीडासमासक्तो गोपीमण्डलमण्डनः॥ १०९॥
गोपीहेममणिश्रेणिमध्येन्द्रमणिरुज्ज्वलः।
विद्याधरेन्दुशापघ्नः शंखचूडशिरोहरः॥ ११०॥
शंखचूडशिरोरत्नसम्प्रीणितबलोऽनघः।
अरिष्टारिष्टकृद्दुष्टकेशिदैत्यनिषूदनः॥ १११॥
सरसः सस्मितमुखः सुस्थिरो विरहाकुलः।
संकर्षणार्पितप्रीतिरक्रूरध्यानगोचरः॥ ११२॥
अक्रूरसंस्तुतो गूढो गुणवृत्त्युपलक्षितः।
प्रमाणगम्यस्तन्मात्राऽवयवी बुद्धितत्परः॥ ११३॥

सर्वप्रमाणप्रमथीसर्वप्रत्ययसाधकः ।
पुरुषश्च प्रधानात्मा विपर्यासविलोचनः ॥ ११४ ॥
मधुराजनसंवीक्ष्यो रजकप्रतिघातकः ।
विचित्राम्बरसंवीतो मालाकारवरप्रदः ॥ ११५ ॥
कुब्जावक्रत्वनिर्मोक्ता कुब्जायौवनदायकः ।
कुब्जाङ्गरागसुरभिः कंसकोदण्डखण्डनः ॥ ११६ ॥
धीरः कुवलयापीडमर्दनः कंसभीतिकृत् ।
दन्तिदन्तायुधो रङ्गत्रासको मल्लयुद्धवित् ॥ ११७ ॥
चाणूरहन्ता कंसारिर्देवकीहर्षदायकः ।
वसुदेवपदानम्रः पितृबन्धविमोचनः ॥ ११८ ॥
उर्वीभयापहो भूप उग्रसेनाधिपत्यदः ।
आज्ञास्थितशचीनाथः सुधर्मानयनक्षमः ॥ ११९ ॥
आद्यो द्विजातिसत्कर्ता शिष्टाचारप्रदर्शकः ।
सान्दीपनिकृताभ्यस्तविद्याभ्यासैकधीः सुधीः ॥ १२० ॥
गुर्वभीष्टक्रियादक्षः पश्चिमोदधिपूजितः ।
हतपञ्चजनप्राप्तपाञ्चजन्यो यमार्चितः ॥ १२१ ॥
धर्मराजजयानीतगुरुपुत्र उरुक्रमः ।
गुरुपुत्रप्रदः शास्ता मधुराजसभासदः ॥ १२२ ॥
जामदग्न्यसमभ्यर्च्यो गोमन्तगिरिसंचरः ।
गोमन्तदावशमनो गरुडानीतभूषणः ॥ १२३ ॥
चक्राद्यायुधसंशोभी जरासन्धमदापहः ।
सृगालावनिपालघ्नः सृगालात्मजराज्यदः ॥ १२४ ॥

विध्वस्तकालयवनो मुचुकुन्दवरप्रदः।
आज्ञापितमहाम्भोधिर्द्वारकापुरकल्पनः ॥ १२५ ॥
द्वारकानिलयो रुक्मिमानहन्ता यदूद्वहः।
रुचिरो रुक्मिणीजानिः प्रद्युम्नजनकः प्रभुः ॥ १२६ ॥
अपाकृतत्रिलोकार्तिरनिरुद्धपितामहः।
अनिरुद्धपदान्वेषी चक्री गरुडवाहनः ॥ १२७ ॥
बाणासुरपुरीरोद्धा रक्षाज्वलनयन्त्रजित्।
धूतप्रमथसंरम्भो जितमाहेश्वरज्वरः ॥ १२८ ॥
षट्चक्रशक्तिनिर्जेता भूतवेतालमोहकृत्।
शम्भुत्रिशूलजिच्छम्भुजम्भणः शम्भुसंस्तुतः ॥ १२९ ॥
इन्द्रियात्मेन्दुहृदयः सर्वयोगेश्वरेश्वरः।
हिरण्यगर्भहृदयो मोहावर्तनिवर्तनः ॥ १३० ॥
आत्मज्ञाननिधिर्मेधाकोशस्तन्मात्ररूपवान्।
इन्द्रोऽग्निवदनः कालनाभः सर्वागमाध्वगः ॥ १३१ ॥
तुरीयः सर्वधीसाक्षी द्वन्द्वाराम आत्मदूरगः।
अज्ञातपारवश्यश्रीरव्याकृतविहारवान् ॥ १३२ ॥
आत्मप्रदीपो विज्ञानमात्रात्मा श्रीनिकेतनः।
बाणबाहुवनच्छेत्ता महेन्द्रप्रीतिवर्धनः ॥ १३३ ॥
अनिरुद्धनिरोधज्ञो जलेशाहृतगोकुलः।
जलेशविजयी वीरः सत्राजिद्रत्नयाचकः ॥ १३४ ॥
प्रसेनान्वेषणोद्युक्तो जाम्बवद्धृतरत्नदः।
जितर्क्षराजतनयाहर्ता जाम्बवतीप्रियः ॥ १३५ ॥

सत्यभामाप्रियः कामः शतधन्वशिरोहरः।
कालिन्दीपतिरक्रूरबन्धुरक्रूररत्नदः ॥ १३६ ॥
कैकेयीरमणो भद्राभर्ता नाग्नजितीधवः।
माद्रीमनोहरः शैब्याप्राणबन्धुरुरुक्रमः ॥ १३७ ॥
सुशीलादयितो मित्रविन्दानेत्रमहोत्सवः।
लक्ष्मणावल्लभो रुद्धप्राग्ज्योतिषमहापुरः ॥ १३८ ॥
सुरपाशावृतिच्छेदी मुरारिः क्रूरयुद्धवित्।
हयग्रीवशिरोहर्ता सर्वात्मा सर्वदर्शनः ॥ १३९ ॥
नरकासुरविच्छेत्ता नरकात्मजराज्यदः।
पृथ्वीस्तुतः प्रकाशात्मा हृद्यो यज्ञफलप्रदः ॥ १४० ॥
गुणग्राही गुणद्रष्टा गूढस्वात्माविभूतिमान्।
कविर्जगदुपद्रष्टा परमाक्षरविग्रहः ॥ १४१ ॥
प्रपन्नपालनो माली महद्ब्रह्मविवर्धनः।
वाच्यवाचकशक्त्यर्थः सर्वव्याकृतसिद्धिदः ॥ १४२ ॥
स्वयम्प्रभुरनिर्वेद्यः स्वप्रकाशश्चिरन्तनः।
नादात्मा मन्त्रकोटीशो नानावादनिरोधकः ॥ १४३ ॥
कन्दर्पकोटिलावण्यः परार्थैकप्रयोजकः।
अमरीकृतदेवौघः कन्यकाबन्धमोचनः ॥ १४४ ॥
षोडशस्त्रीसहस्रेशः कान्तः कान्तामनोभवः।
क्रीडारत्नाचलाहर्ता वरुणच्छत्रशोभितः ॥ १४५ ॥
शक्राभिवन्दितः शक्रजननीकुण्डलप्रदः।
अदितिप्रस्तुतस्तोत्रो ब्राह्मणोद्घुष्टचेष्टनः ॥ १४६ ॥

पुराणः संयमी जन्मालिप्तः षड्विंशकोऽर्थदः।
यशस्यनीतिराद्यन्तरहितः सत्कथाप्रियः॥ १४७॥
ब्रह्मबोधः परानन्दः पारिजातापहारकः।
पौण्ड्रकप्राणहरणः काशिराजनिषूदनः॥ १४८॥
कृत्यागर्वप्रशमनो विचक्रवधदीक्षितः।
हंसविध्वंसनः साम्बजनको डिम्भकार्दनः॥ १४९॥
मुनिर्गोप्ता पितृवरप्रदः सवनदीक्षितः।
रथी सारथ्यनिर्देष्टा फाल्गुनः फाल्गुनिप्रियः॥ १५०॥
सप्ताब्धिस्तम्भनोद्भूतो हरिः सप्ताब्धिभेदनः।
आत्मप्रकाशः पूर्णश्रीरादिनारायणेक्षितः॥ १५१॥
विप्रपुत्रप्रदश्चैव सर्वमातृसुतप्रदः।
पार्थविस्मयकृत्पार्थप्रणवार्थप्रबोधनः॥ १५२॥
कैलासयात्रासुमुखो बदर्याश्रमभूषणः।
घण्टाकर्णक्रियामौढ्यतोषितो भक्तवत्सलः॥ १५३॥
मुनिवृन्दादिभिर्ध्येयो घण्टाकर्णवरप्रदः।
तपश्चर्यापरश्चीरवासाः पिङ्गजटाधरः॥ १५४॥
प्रत्यक्षीकृतभूतेशः शिवस्तोता शिवस्तुतः।
कृष्णास्वयंवरालोककौतुकी सर्वसम्मतः॥ १५५॥
बलसंरम्भशमनो बलदर्शितपाण्डवः।
यतिवेषार्जुनाभीष्टदायी सर्वात्मगोचरः॥ १५६॥
सुभद्राफाल्गुनोद्वाहकर्ता प्रीणितफाल्गुनः।
खाण्डवप्रीणितार्चिष्मान् मयदानवमोचनः॥ १५७॥

सुलभो राजसूयार्हो युधिष्ठिरनियोजकः।
भीमार्दितजरासन्धो मागधात्मजराज्यदः॥ १५८॥
राजबन्धननिर्मोक्ता राजसूयाग्रपूजनः।
चैद्याद्यसहनो भीष्मस्तुतः सात्वतपूर्वजः॥ १५९॥
सर्वात्मार्थसमाहर्ता मन्दराचलधारकः।
यज्ञावतारः प्रह्लादप्रतिज्ञापरिपालकः॥ १६०॥
बलियज्ञसभाध्वंसी दृप्तक्षत्रकुलान्तकः।
दशग्रीवान्तको जेता रेवतीप्रेमवल्लभः॥ १६१॥
सर्वावताराधिष्ठाता वेदबाह्यविमोहनः।
कलिदोषनिराकर्ता दशनामा दृढव्रतः॥ १६२॥
अमेयात्मा जगत्स्वामी वाग्मी चैद्यशिरोहरः।
द्रौपदीरचितस्तोत्रः केशवः पुरुषोत्तमः॥ १६३॥
नारायणो मधुपतिर्माधवो दोषवर्जितः।
गोविन्दः पुण्डरीकाक्षो विष्णुश्च मधुसूदनः॥ १६४॥
त्रिविक्रमस्त्रिलोकेशो वामनः श्रीधरः पुमान्।
हृषीकेशो वासुदेवः पद्मनाभो महाह्रदः॥ १६५॥
दामोदरश्चतुर्व्यूहः पाञ्चालीमानरक्षणः।
शाल्वघ्नः समरश्लाघी दन्तवक्त्रनिबर्हणः॥ १६६॥
दामोदरप्रियसखः पृथुकास्वादनप्रियः।
घृणी दामोदरः श्रीदो गोपीपुनरवेक्षकः॥ १६७॥
गोपिकामुक्तिदो योगी दुर्वासस्तृप्तिकारकः।
अविज्ञातव्रजाकीर्णपाण्डवालोकनो जयी॥ १६८॥

पार्थसारथ्यनिरतः प्राज्ञः पाण्डवदौत्यकृत्।
विदुरातिथ्यसंतुष्टः कुन्तीसंतोषदायकः॥ १६९॥
सुयोधनतिरस्कर्ता दुर्योधनविकारवित्।
विदुराभिष्टुतो नित्यो वार्ष्णेयो मङ्गलात्मकः॥ १७०॥
पञ्चविंशतितत्त्वेशश्चतुर्विंशतिदेहभाक्।
सर्वानुग्राहकः सर्वदाशार्हसततार्चितः॥ १७१॥
अचिन्त्यो मधुरालापः साधुदर्शी दुरासदः।
मनुष्यधर्मानुगतः कौरवेन्द्रक्षयेक्षितः॥ १७२॥
उपेन्द्रो दानवारातिरुरुगीतो महाद्युतिः।
ब्रह्मण्यदेवः श्रुतिमान् गोब्राह्मणहिताशयः॥ १७३॥
वरशीलः शिवारम्भः सुविज्ञानविमूर्तिमान्।
स्वभावशुद्धः सन्मित्रः सुशरण्यः सुलक्षणः॥ १७४॥
धृतराष्ट्रगतो दृष्टिप्रदः कर्णविभेदनः।
प्रतोदधृग्विश्वरूपविस्मारितधनञ्जयः॥ १७५॥
सामगानप्रियो धर्मधेनुर्वर्णोत्तमोऽव्ययः।
चतुर्युगक्रियाकर्ता विश्वरूपप्रदर्शकः॥ १७६॥
ब्रह्मबोधपरित्रातपार्थो भीष्मार्थचक्रभृत्।
अर्जुनायासविध्वंसी कालदंष्ट्राविभूषणः॥ १७७॥
सुजातानन्तमहिमा स्वप्नव्यापारितार्जुनः।
अकालसन्ध्याघटनश्चक्रान्तरितभास्करः॥ १७८॥
दुष्टप्रमथनः पार्थप्रतिज्ञापरिपालकः।
सिन्धुराजशिरःपातस्थानवक्ता विवेकदृक्॥ १७९॥

सुभद्राशोकहरणो द्रोणोत्सेकादिविस्मितः।
पार्थमन्युनिराकर्ता पाण्डवोत्सवदायकः॥ १८०॥
अङ्गुष्ठाक्रान्तकौन्तेयरथचक्रोऽहिशीर्षजित्।
कालकोपप्रशमनो भीमसेनजयप्रदः॥ १८१॥
अश्वत्थामवधायासत्रातपाण्डुसुतः कृती।
इषीकास्त्रप्रशमनो द्रौणिरक्षाविचक्षणः॥ १८२॥
पार्थापहारितद्रौणिचूडामणिरभंगुरः।
धृतराष्ट्रपरामृष्टभीमप्रतिकृतिस्मयः॥ १८३॥
भीष्मबुद्धिप्रदः शान्तः शरच्चन्द्रनिभाननः।
गदाग्रजन्मा पाञ्चालीप्रतिज्ञापरिपालकः॥ १८४॥
गान्धारीकोपदृग्गुप्तधर्मसूनुरनामयः।
प्रपन्नार्तिभयच्छेत्ता भीष्मशल्यव्यथापहः॥ १८५॥
शान्तः शान्तनवोदीर्णः सर्वधर्मसमाहितः।
स्मारितब्रह्मविद्यार्थप्रीतपार्थो महास्त्रवित्॥ १८६॥
प्रसादपरमोदारो गाङ्गेयसुगतिप्रदः।
विपक्षपक्षक्षयकृत्परीक्षित्प्राणरक्षणः॥ १८७॥
जगद्गुरुर्धर्मसूनोर्वाजिमेधप्रवर्तकः।
विहितार्थ आप्तसत्कारो मासकात्परिवर्तदः॥ १८८॥
उत्तङ्कहर्षदात्मीयदिव्यरूपप्रदर्शकः।
जनकावगतस्वोक्तभारतः सर्वभावनः॥ १८९॥
असोढयादवोद्रेको विहिताप्तादिपूजनः।
समुद्रस्थापिताश्चर्यमुसलो वृष्णिवाहकः॥ १९०॥

मुनिशापायुधः पद्मासनादित्रिदशार्थितः।
सृष्टिप्रत्यवहारोत्कटस्वधामगमनोत्सुकः ॥ १९१ ॥
प्रभासालोकनोद्युक्तो नानाविधनिमित्तकृत्।
सर्वयादवसंसेव्यः सर्वोत्कृष्टपरिच्छदः ॥ १९२ ॥
वेलाकाननसंचारी वेलानिलहृतश्रमः।
कालात्मा यादवोऽनन्तः स्तुतिसंतुष्टमानसः ॥ १९३ ॥
द्विजालोकनसंतुष्टः पुण्यतीर्थमहोत्सवः।
सत्काराह्लादिताशेषभूसुरः सुरवल्लभः ॥ १९४ ॥
पुण्यतीर्थाप्लुतः पुण्यः पुण्यदस्तीर्थपावनः।
विप्रसात्कृतगोकोटिः शतकोटिसुवर्णदः ॥ १९५ ॥
स्वमायामोहिताऽशेषवृष्णिवीरो विशेषवित्।
जलजायुधनिर्देष्टा स्वात्मावेशितयादवः ॥ १९६ ॥
देवताभीष्टवरदः कृतकृत्यः प्रसन्नधीः।
स्थिरशेषायुतबलः सहस्त्रफणिवीक्षणः ॥ १९७ ॥
ब्रह्मवृक्षवरच्छायासीनः पद्मासनस्थितः।
प्रत्यगात्मा स्वभावार्थः प्रणिधानपरायणः ॥ १९८ ॥
व्याधेषुविद्धपूज्यांघ्रिर्निषादभयमोचनः।
पुलिन्दस्तुतिसंतुष्टः पुलिन्दसुगतिप्रदः ॥ १९९ ॥
दारुकार्पितपार्थादिकरणीयोक्तिरीशिता।
दिव्यदुन्दुभिसंयुक्तः पुष्पवृष्टिप्रपूजितः ॥ २०० ॥
पुराणः परमेशानः पूर्णभूमा परिष्टुतः।
पतिराद्यः परं ब्रह्म परमात्मा परात्परः ॥ २०१ ॥

॥ श्रीपरमात्मा परात्पर ॐ नम इति ॥

॥ फलश्रुतिः ॥

इदं सहस्रं कृष्णस्य नाम्नां सर्वार्थदायकम्।
अनन्तरूपी भगवान् व्याख्यातादौ स्वयम्भुवे॥ २०२॥
तेन प्रोक्तं वसिष्ठाय ततो लब्ध्वा पराशरः।
व्यासाय तेन सम्प्रोक्तं शुको व्यासादवाप्तवान्॥ २०३॥
तच्छिष्यैर्बहुभिर्भूमौ ख्यापितं द्वापरे युगे।
कृष्णाज्ञया हरिहरः कलौ प्रख्यापयद्विभुः॥ २०४॥
इदं पठति भक्त्या यः शृणोति च समाहितः।
स्वसिद्ध्यै प्रार्थयन्त्येनं तीर्थक्षेत्रादिदेवताः॥ २०५॥
प्रायश्चित्तान्यशेषाणि नालं यानि व्यपोहितुम्।
तानि पापानि नश्यन्ति सकृदस्य प्रशंसनात्॥ २०६॥
ऋणत्रयविमुक्तस्य श्रौतस्मार्तानुवर्तिनः।
ऋषेस्त्रिमूर्तिरूपस्य फलं विन्देदिदं पठन्॥ २०७॥
इदं नामसहस्रं यः पठत्येतच्छृणोति च।
शिवलिङ्गसहस्रस्य स प्रतिष्ठाफलं लभेत्॥ २०८॥
इदं किरीटी संजप्य जयी पाशुपतास्त्रभाक्।
कृष्णस्य प्राणभूतः सन् कृष्णं सारथिमाप्तवान्॥ २०९॥
द्रौपद्या दमयन्त्या च सावित्र्या च सुशीलया।
दुरितानि जितान्येतज्जपादाप्तं च वाञ्छितम्॥ २१०॥
किमिदं बहुना शंसन्मानवो मोदनिर्भरः।
ब्रह्मानन्दमवाप्यान्ते कृष्णसायुज्यमाप्नुयात्॥ २११॥

॥ इति श्रीविष्णुधर्मोत्तरपुराणे श्रीकृष्णसहस्रनामस्तोत्रं सम्पूर्णम्॥

॥ श्रीकृष्णाय नमः ॥

# श्रीकृष्णसहस्त्रनामावलिः

१ ॐ कृष्णाय नमः।
२ ॐ श्रीवल्लभाय नमः।
३ ॐ शार्ङ्गिणे नमः।
४ ॐ विष्वक्सेनाय नमः।
५ ॐ स्वसिद्धिदाय नमः।
६ ॐ क्षीरोदधाम्ने नमः।
७ ॐ व्यूहेशाय नमः।
८ ॐ शेषशायिने नमः।
९ ॐ जगन्मयाय नमः।
१० ॐ भक्तिगम्याय नमः।
११ ॐ त्रयीमूर्तये नमः।
१२ ॐ भारार्तवसुधास्तुताय नमः।
१३ ॐ देवदेवाय नमः।
१४ ॐ दयासिन्धवे नमः।
१५ ॐ देवाय नमः।
१६ ॐ देवशिखामणये नमः।
१७ ॐ सुखभावाय नमः।
१८ ॐ सुखाधाराय नमः।
१९ ॐ मुकुन्दाय नमः।
२० ॐ मुदिताशयाय नमः।
२१ ॐ अविक्रियाय नमः।
२२ ॐ क्रियामूर्तये नमः।
२३ ॐ अध्यात्मस्वस्वरूपवते नमः।
२४ ॐ शिष्टाभिलक्ष्याय नमः।
२५ ॐ भूतात्मने नमः।
२६ ॐ धर्मत्राणार्थचेष्टिताय नमः।
२७ ॐ अन्तर्यामिणे नमः।
२८ ॐ कलारूपाय नमः।
२९ ॐ कालावयवसाक्षिकाय नमः।
३० ॐ वसुधायासहरणाय नमः।
३१ ॐ नारदप्रेरणोन्मुखाय नमः।
३२ ॐ प्रभूष्णवे नमः।
३३ ॐ नारदोद्गीताय नमः।
३४ ॐ लोकरक्षापरायणाय नमः।
३५ ॐ रौहिणेयकृतानन्दाय नमः।
३६ ॐ योगज्ञाननियोजकाय नमः।
३७ ॐ महागुहान्तर्निक्षिप्ताय नमः।
३८ ॐ पुराणवपुषे नमः।
३९ ॐ आत्मवते नमः।
४० ॐ शूरवंशैकधिये नमः।
४१ ॐ शौरये नमः।
४२ ॐ कंसशंकाविषादकृते नमः।

४३ ॐ वसुदेवोल्लसच्छक्तये नमः।
४४ ॐ देवक्यष्टमगर्भगाय नमः।
४५ ॐ वसुदेवस्तुताय नमः।
४६ ॐ श्रीमते नमः।
४७ ॐ देवकीनन्दनाय नमः।
४८ ॐ हरये नमः।
४९ ॐ आश्चर्यबालाय नमः।
५० ॐ श्रीवत्सलक्ष्मवक्षसे नमः।
५१ ॐ चतुर्भुजाय नमः।
५२ ॐ स्वभावोत्कृष्टसद्भावाय नमः।
५३ ॐ कृष्णाष्टम्यन्तसम्भवाय नमः।
५४ ॐ प्राजापत्यर्क्षसम्भूताय नमः।
५५ ॐ निशीथसमयोदिताय नमः।
५६ ॐ शंखचक्रगदापद्मपाणये नमः।
५७ ॐ पद्मनिभेक्षणाय नमः।
५८ ॐ किरीटिने नमः
५९ ॐ कौस्तुभोरस्काय नमः।
६० ॐ स्फुरन्मकरकुण्डलाय नमः।
६१ ॐ पीतवाससे नमः।
६२ ॐ घनश्यामाय नमः।
६३ ॐ कुञ्चिताञ्चितकुन्तलाय नमः।
६४ ॐ सुव्यक्तव्यक्ताभरणाय नमः।
६५ ॐ सूतिकागृहभूषणाय नमः।
६६ ॐ कारागारान्धकारघ्नाय नमः।
६७ ॐ पितृप्राग्जन्मसूचकाय नमः।
६८ ॐ वसुदेवस्तुताय नमः।
६९ ॐ स्तोत्राय नमः।
७० ॐ तापत्रयनिवारणाय नमः।
७१ ॐ निरवद्याय नमः।
७२ ॐ क्रियामूर्तये नमः।
७३ ॐ न्यायवाक्यनियोजकाय नमः।
७४ ॐ अदृष्टचेष्टाय नमः।
७५ ॐ कूटस्थाय नमः।
७६ ॐ धृतलौकिकविग्रहाय नमः।
७७ ॐ महर्षिमानसोल्लासाय नमः।
७८ ॐ महीमङ्गलदायकाय नमः।
७९ ॐ संतोषितसुरव्राताय नमः।
८० ॐ साधुचित्तप्रसादकाय नमः।
८१ ॐ जनकोपायनिर्देष्ट्रे नमः।
८२ ॐ देवकीनयनोत्सवाय नमः।
८३ ॐ पितृपाणिपरिष्काराय नमः।
८४ ॐ मोहितागाररक्षकाय नमः।
८५ ॐ स्वशक्त्युद्घाटिताशेषकपाटाय नमः।
८६ ॐ पितृवाहकाय नमः।
८७ ॐ शेषोरगफणाच्छत्राय नमः।
८८ ॐ शेषोक्ताख्यासहस्रकाय नमः।
८९ ॐ यमुनापूरविध्वंसिने नमः।
९० ॐ स्वभासोद्भासितव्रजाय नमः।
९१ ॐ कृतात्मविद्याविन्यासाय नमः।
९२ ॐ योगमायाग्रसम्भवाय नमः।
९३ ॐ दुर्गानिवेदितोद्भावाय नमः।
९४ ॐ यशोदातल्पशायकाय नमः।
९५ ॐ नन्दगोपोत्सवस्फूर्तये नमः।
९६ ॐ व्रजानन्दकरोदयाय नमः।
९७ ॐ सुजातजातकर्मश्रिये नमः।

९८ ॐ गोपीभद्रोक्तिनिर्वृताय नमः।
९९ ॐ अलीकनिद्रोपगमाय नमः।
१०० ॐ पूतनास्तनपीडनाय नमः।
१०१ ॐ स्तन्यात्तपूतनाप्राणाय नमः।
१०२ ॐ पूतनाक्रोशकारकाय नमः।
१०३ ॐ विन्यस्तरक्षागोधूलये नमः।
१०४ ॐ यशोदाकरलालिताय नमः।
१०५ ॐ नन्दाघ्रातशिरोमध्याय नमः।
१०६ ॐ पूतनासुगतिप्रदाय नमः।
१०७ ॐ बालाय नमः।
१०८ ॐ पर्यङ्कनिद्रालवे नमः।
१०९ ॐ मुखार्पितपदाङ्गुलये नमः।
११० ॐ अञ्जनस्निग्धनयनाय नमः।
१११ ॐ पर्यायाङ्कुरितस्मिताय नमः।
११२ ॐ लीलाक्षाय नमः।
११३ ॐ तरलालोकाय नमः।
११४ ॐ शकटासुरभञ्जनाय नमः।
११५ ॐ द्विजोदितस्वस्त्ययनाय नमः।
११६ ॐ मन्त्रपूतजलाप्लुताय नमः।
११७ ॐ यशोदोत्सङ्गपर्यङ्काय नमः।
११८ ॐ यशोदामुखवीक्षकाय नमः।
११९ ॐ यशोदास्तन्यमुदिताय नमः।
१२० ॐ तृणावर्तादिदुःसहाय नमः।
१२१ ॐ तृणावर्तासुरध्वंसिने नमः।
१२२ ॐ मातृविस्मयकारकाय नमः।
१२३ ॐ प्रशस्तनामकरणाय नमः।
१२४ ॐ जानुचंक्रमणोत्सुकाय नमः।
१२५ ॐ व्यालम्बिचूलिकारत्नाय नमः।
१२६ ॐ घोषगोपाय नमः।
१२७ ॐ प्रहर्षणाय नमः।
१२८ ॐ स्वमुखप्रतिबिम्बार्थिने नमः।
१२९ ॐ ग्रीवाव्याघ्रनखोज्ज्वलाय नमः।
१३० ॐ पंकानुलेपरुचिराय नमः।
१३१ ॐ मांसलोरुकटीतटाय नमः।
१३२ ॐ घृष्टजानुकरद्वन्द्वाय नमः।
१३३ ॐ प्रतिबिम्बानुकारकृते नमः।
१३४ ॐ अव्यक्तवर्णवाग्वृत्तये नमः।
१३५ ॐ स्मितलक्ष्यरदोद्गमाय नमः।
१३६ ॐ धात्रीकरसमालम्बिने नमः।
१३७ ॐ प्रस्खलच्चित्रचंक्रमाय नमः।
१३८ ॐ अनुरूपवयस्याढ्याय नमः।
१३९ ॐ चारुकौमारचापलाय नमः।
१४० ॐ वत्सपुच्छसमाकृष्टाय नमः।
१४१ ॐ वत्सपुच्छविकर्षणाय नमः।
१४२ ॐ विस्मारितान्यव्यापाराय नमः।
१४३ ॐ गोपगोपीमुदावहाय नमः।
१४४ ॐ अकालवत्सनिर्मोक्त्रे नमः।
१४५ ॐ व्रजव्याक्रोशसुस्मिताय नमः।
१४६ ॐ नवनीतमहाचोराय नमः।
१४७ ॐ दारकाहारदायकाय नमः।
१४८ ॐ पीठोलूखलसोपानाय नमः।
१४९ ॐ क्षीरभाण्डविभेदनाय नमः।
१५० ॐ शिक्यभाण्डसमाकर्षिणे नमः।
१५१ ॐ ध्वान्तागारप्रवेशकृते नमः।
१५२ ॐ भूषारत्नप्रकाशाढ्याय नमः।
१५३ ॐ गोप्युपालम्भभर्त्सिताय नमः।

१५४ ॐ परागधूसराकाराय नमः।
१५५ ॐ मृद्भक्षणकृतेक्षणाय नमः।
१५६ ॐ बालोक्तमृत्कथारम्भाय नमः।
१५७ ॐ मित्रान्तर्गूढविग्रहाय नमः।
१५८ ॐ कृतसंत्रासलोलाक्षाय नमः।
१५९ ॐ जननीप्रत्ययावहाय नमः।
१६० ॐ मातृदृश्यात्तवदनाय नमः।
१६१ ॐ वक्त्रलक्ष्यचराचराय नमः।
१६२ ॐ यशोदालालितस्वात्मने नमः।
१६३ ॐ स्वयं स्वाच्छन्द्यमोहनाय नमः।
१६४ ॐ सवित्रीस्नेहसंश्लिष्टाय नमः।
१६५ ॐ सवित्रीस्तनलोलुपाय नमः।
१६६ ॐ नवनीतार्थनाप्रह्वाय नमः।
१६७ ॐ नवनीतमहाशनाय नमः।
१६८ ॐ मृषाकोपप्रकम्पोष्ठाय नमः।
१६९ ॐ गोष्ठाङ्गणविलोकनाय नमः।
१७० ॐ दधिमन्थघटीभेत्त्रे नमः।
१७१ ॐ किंकिणीक्वाणसूचिताय नमः।
१७२ ॐ हैयङ्गवीनरसिकाय नमः।
१७३ ॐ मृषाश्रवे नमः।
१७४ ॐ चौर्यशङ्कित्ताय नमः।
१७५ ॐ जननीश्रमविज्ञात्रे नमः।
१७६ ॐ दामबन्धनियन्त्रिताय नमः।
१७७ ॐ दामाकल्पाय नमः।
१७८ ॐ चलापाङ्गाय नमः।
१७९ ॐ गाढोलूखलबन्धनाय नमः।
१८० ॐ आकृष्टोलूखलाय नमः।
१८१ ॐ अनन्ताय नमः।
१८२ ॐ कुबेरसुतशापविदे नमः।
१८३ ॐ नारदोक्तिपरामर्शिणे नमः।
१८४ ॐ यमलार्जुनभञ्जनाय नमः।
१८५ ॐ धनदात्मजसङ्घुष्टाय नमः।
१८६ ॐ नन्दमोचितबन्धनाय नमः।
१८७ ॐ बालकोद्गीतनिरताय नमः।
१८८ ॐ बाहुक्षेपोदितप्रियाय नमः।
१८९ ॐ आत्मज्ञाय नमः।
१९० ॐ मित्रवशगाय नमः।
१९१ ॐ गोपीगीतगुणोदयाय नमः।
१९२ ॐ प्रस्थानशकटारूढाय नमः।
१९३ ॐ वृन्दावनकृतालयाय नमः।
१९४ ॐ गोवत्सपालनैकाग्राय नमः।
१९५ ॐ नानाक्रीडापरिच्छदाय नमः।
१९६ ॐ क्षेपणीक्षेपणाय नमः।
१९७ ॐ प्रीताय नमः।
१९८ ॐ वेणुवाद्यविशारदाय नमः।
१९९ ॐ वृषवत्सानुकरणाय नमः।
२०० ॐ वृषध्वानविडम्बनाय नमः।
२०१ ॐ नियुद्धलीलासंहृष्टाय नमः।
२०२ ॐ कूजानुकृतकोकिलाय नमः।
२०३ ॐ उपात्तहंसगमनाय नमः।
२०४ ॐ सर्वजन्तुरुतानुकृते नमः।
२०५ ॐ भृङ्गानुकारिणे नमः।
२०६ ॐ दध्यन्नचोराय नमः।
२०७ ॐ वत्सपुरस्सराय नमः।
२०८ ॐ बलिने नमः।
२०९ ॐ बकासुरग्राहिणे नमः।

२१० ॐ बकतालुप्रदाहकाय नमः।
२११ ॐ भीतगोपार्भकाहूताय नमः।
२१२ ॐ बकचञ्चुविदारणाय नमः।
२१३ ॐ बकासुरारये नमः।
२१४ ॐ गोपालाय नमः।
२१५ ॐ बालाय नमः।
२१६ ॐ बालाद्भुतावहाय नमः।
२१७ ॐ बलभद्रसमाश्लिष्टाय नमः।
२१८ ॐ कृतक्रीडानिलायनाय नमः।
२१९ ॐ क्रीडासेतुनिधानज्ञाय नमः।
२२० ॐ प्लवङ्गोत्प्लवनाय नमः।
२२१ ॐ अद्भुताय नमः।
२२२ ॐ कन्दुकक्रीडनाय नमः।
२२३ ॐ लुप्तनन्दादिभववेदनाय नमः।
२२४ ॐ सुमनसे नमः।
२२५ ॐ अलंकृतशिरसे नमः।
२२६ ॐ स्वादुस्निग्धान्नशिक्यभृते नमः।
२२७ ॐ गुञ्जाप्रालम्बनच्छन्नाय नमः।
२२८ ॐ पिञ्छैरलकवेषकृते नमः।
२२९ ॐ वन्याशनप्रियाय नमः।
२३० ॐ शृङ्गरवाकारितवत्सकाय नमः।
२३१ ॐ मनोज्ञपल्लवोत्तंसपुष्पस्वेच्छात्तषट्पदाय नमः।
२३२ ॐ मञ्जुशिञ्जितमञ्जीरचरणाय नमः।
२३३ ॐ करकङ्कणाय नमः।
२३४ ॐ अन्योन्यशासनाय नमः।
२३५ ॐ क्रीडापटवे नमः।
२३६ ॐ परमकैतवाय नमः।
२३७ ॐ प्रतिध्वानप्रमुदिताय नमः।
२३८ ॐ शाखाचतुरचंक्रमाय नमः।
२३९ ॐ अघदानवसंहर्त्रे नमः।
२४० ॐ व्रजविघ्नविनाशनाय नमः।
२४१ ॐ व्रजसञ्जीवनाय नमः।
२४२ ॐ श्रेयोनिधये नमः।
२४३ ॐ दानवमुक्तिदाय नमः।
२४४ ॐ कालिन्दीपुलिनासीनाय नमः।
२४५ ॐ सहभुक्तव्रजार्भकाय नमः।
२४६ ॐ कक्षाजठरविन्यस्तवेणवे नमः।
२४७ ॐ वल्लवचेष्टिताय नमः।
२४८ ॐ भुजसन्ध्यन्तरन्यस्तशृङ्गवेत्राय नमः।
२४९ ॐ शुचिस्मिताय नमः।
२५० ॐ वामपाणिस्थदध्यन्नकवलाय नमः।
२५१ ॐ कलभाषणाय नमः।
२५२ ॐ अङ्गुल्यन्तरविन्यस्तफलाय नमः।
२५३ ॐ परमपावनाय नमः।
२५४ ॐ अदृश्यतर्णकान्वेषिणे नमः।
२५५ ॐ वल्लवार्भकभीतिघ्ने नमः।
२५६ ॐ अदृष्टवत्सपव्राताय नमः।
२५७ ॐ ब्रह्मविज्ञातवैभवाय नमः।
२५८ ॐ गोवत्सवत्सपान्वेषिणे नमः।
२५९ ॐ विराट्पुरुषविग्रहाय नमः।
२६० ॐ स्वसंकल्पानुरूपार्थाय नमः।
२६१ ॐ वत्साय नमः।

२६२ ॐ वत्सपरूपधृते नमः।
२६३ ॐ यथावत्सक्रियारूपाय नमः।
२६४ ॐ यथास्थाननिवेशनाय नमः।
२६५ ॐ यथाव्रजार्भकाकाराय नमः।
२६६ ॐ गोगोपीस्तन्यपाय नमः।
२६७ ॐ सुखिने नमः।
२६८ ॐ चिराद्बलाय नमः।
२६९ ॐ हिताय नमः।
२७० ॐ दान्ताय नमः।
२७१ ॐ ब्रह्मविज्ञातवैभवाय नमः।
२७२ ॐ विचित्रशक्तये नमः।
२७३ ॐ व्यालीनाय नमः।
२७४ ॐ सृष्टगोवत्सवत्सपाय नमः।
२७५ ॐ ब्रह्मत्रपाकराय नमः।
२७६ ॐ धातृस्तुताय नमः।
२७७ ॐ सर्वार्थसाधकाय नमः।
२७८ ॐ ब्रह्मणे नमः।
२७९ ॐ ब्रह्ममयाय नमः।
२८० ॐ अव्यक्ताय नमः।
२८१ ॐ तेजोरूपाय नमः।
२८२ ॐ सुखात्मकाय नमः।
२८३ ॐ निरुक्ताय नमः।
२८४ ॐ व्याकृतये नमः।
२८५ ॐ व्यक्ताय नमः।
२८६ ॐ निरालम्बनभावनाय नमः।
२८७ ॐ प्रभविष्णवे नमः।
२८८ ॐ अतन्त्रीकाय नमः।
२८९ ॐ देवपक्षार्थरूपधृषे नमः।
२९० ॐ अकामाय नमः।
२९१ ॐ सर्ववेदादये नमः।
२९२ ॐ अणीयसे नमः।
२९३ ॐ स्थूलरूपवते नमः।
२९४ ॐ व्यापिने नमः।
२९५ ॐ व्याप्याय नमः।
२९६ ॐ कृपाकर्त्रे नमः।
२९७ ॐ विचित्राचारसम्मताय नमः।
२९८ ॐ छन्दोमयाय नमः।
२९९ ॐ प्रधानात्मने नमः।
३०० ॐ मूर्ताय नमः।
३०१ ॐ मूर्तद्वयाकृतये नमः।
३०२ ॐ अनेकमूर्तये नमः।
३०३ ॐ अक्रोधाय नमः।
३०४ ॐ परस्मै नमः।
३०५ ॐ प्रकृतये नमः।
३०६ ॐ अक्रमाय नमः।
३०७ ॐ सकलावरणोपेताय नमः।
३०८ ॐ सर्वदेवाय नमः।
३०९ ॐ महेश्वराय नमः।
३१० ॐ महाप्रभावनाय नमः।
३११ ॐ पूर्ववत्साय नमः।
३१२ ॐ वत्सपदर्शकाय नमः।
३१३ ॐ कृष्णाय नमः।
३१४ ॐ यादवाय नमः।
३१५ ॐ गोपालाय नमः।
३१६ ॐ गोपालोकनहर्षिताय नमः।
३१७ ॐ स्मितेक्षाहर्षिताय नमः।

३१८ ॐ ब्रह्मणे नमः।
३१९ ॐ भक्तवत्सलाय नमः।
३२० ॐ वाक्प्रियाय नमः।
३२१ ॐ ब्रह्मानन्दाश्रुधौतांघ्रये नमः।
३२२ ॐ लीलावैचित्र्यकोविदाय नमः।
३२३ ॐ बलभद्रैकहृदयाय नमः।
३२४ ॐ नामाकारितगोकुलाय नमः।
३२५ ॐ गोपालबालकाय नमः।
३२६ ॐ भव्याय नमः।
३२७ ॐ रज्जुयज्ञोपवीतवते नमः।
३२८ ॐ वृक्षच्छायाहताशान्तये नमः।
३२९ ॐ गोपोत्सङ्गोपबर्हणाय नमः।
३३० ॐ गोपसंवाहितपदाय नमः।
३३१ ॐ गोपव्यजनवीजिताय नमः।
३३२ ॐ गोपगानसुखोन्निद्राय नमः।
३३३ ॐ श्रीदामार्जितसौहृदाय नमः।
३३४ ॐ सुनन्दसुहृदे नमः।
३३५ ॐ एकात्मने नमः।
३३६ ॐ सुबलप्राणरञ्जनाय नमः।
३३७ ॐ तालीवनकृतक्रीडाय नमः।
३३८ ॐ बलपातितधेनुकाय नमः।
३३९ ॐ गोपीसौभाग्यसम्भाव्याय नमः।
३४० ॐ गोधूलिच्छुरितालकाय नमः।
३४१ ॐ गोपीविरहसंतप्ताय नमः।
३४२ ॐ गोपिकाकृतमज्जनाय नमः।
३४३ ॐ प्रलम्बबाहवे नमः।
३४४ ॐ उत्फुल्लपुण्डरीकावतं-सकाय नमः।
३४५ ॐ विलासललितस्मेरगर्भलीलावलोकनाय नमः।
३४६ ॐ स्त्रग्भूषणानुलेपाढ्याय नमः।
३४७ ॐ जनन्युपहृतान्नभुजे नमः।
३४८ ॐ वरशय्याशयाय नमः।
३४९ ॐ राधाप्रेमसल्लापनिर्वृताय नमः।
३५० ॐ यमुनातटसञ्चारिणे नमः।
३५१ ॐ विषार्तव्रजहर्षदाय नमः।
३५२ ॐ कालियक्रोधजनकाय नमः।
३५३ ॐ वृद्धाहिकुलवेष्टिताय नमः।
३५४ ॐ कालियाहिफणारङ्गनटाय नमः।
३५५ ॐ कालियमर्दनाय नमः।
३५६ ॐ नागपत्नीस्तुतिप्रीताय नमः।
३५७ ॐ नानावेषसमृद्धिकृते नमः।
३५८ ॐ अविषाक्तदृशे नमः।
३५९ ॐ आत्मेशाय नमः।
३६० ॐ स्वदृगात्मने नमः।
३६१ ॐ स्तुतिप्रियाय नमः।
३६२ ॐ सर्वेश्वराय नमः।
३६३ ॐ सर्वगुणाय नमः।
३६४ ॐ प्रसिद्धाय नमः।
३६५ ॐ सर्वसात्वताय नमः।
३६६ ॐ अकुण्ठधाम्ने नमः।
३६७ ॐ चन्द्रार्कदृष्टये नमः।
३६८ ॐ आकाशनिर्मलाय नमः।
३६९ ॐ अनिर्देश्यगतये नमः।
३७० ॐ नागवनितापतिभैक्षदाय नमः।
३७१ ॐ स्वांघ्रिमुद्राङ्कनागेन्द्रमूर्ध्ने नमः।

३७२ ॐ कालियसंस्तुताय नमः।
३७३ ॐ अभयाय नमः।
३७४ ॐ विश्वतश्चक्षुषे नमः।
३७५ ॐ स्तुतोत्तमगुणाय नमः।
३७६ ॐ प्रभवे नमः।
३७७ ॐ अहमात्मने नमः।
३७८ ॐ मरुत्प्राणाय नमः।
३७९ ॐ परमात्मने नमः।
३८० ॐ द्युशीर्षवते नमः।
३८१ ॐ नागोपायनहृष्टात्मने नमः।
३८२ ॐ ह्रदोत्सारितकालियाय नमः।
३८३ ॐ बलभद्रसुखालापाय नमः।
३८४ ॐ गोपालिङ्गननिर्वृताय नमः।
३८५ ॐ दावाग्निभीतगोपालगोप्त्रे नमः।
३८६ ॐ दावाग्निनाशनाय नमः।
३८७ ॐ नयनाच्छादनक्रीडालम्पटाय नमः।
३८८ ॐ नृपचेष्टिताय नमः।
३८९ ॐ काकपक्षधराय नमः।
३९० ॐ सौम्याय नमः।
३९१ ॐ बलवाहकाय नमः।
३९२ ॐ केलिमते नमः।
३९३ ॐ बलघातितदुर्धर्षाय नमः।
३९४ ॐ प्रलम्बाय नमः।
३९५ ॐ बलवत्सलाय नमः।
३९६ ॐ मुञ्जाटव्यग्निशमनाय नमः।
३९७ ॐ प्रावृट्कालविनोदवते नमः।
३९८ ॐ शिलान्यस्तान्नभृते नमः।
३९९ ॐ दैत्यसंहर्त्रे नमः।
४०० ॐ शाद्वलासनाय नमः।
४०१ ॐ सदाप्तगोपिकोद्गीताय नमः।
४०२ ॐ कर्णिकारावतंसकाय नमः।
४०३ ॐ नटवेषधराय नमः।
४०४ ॐ पद्ममालाङ्काय नमः।
४०५ ॐ गोपिकावृताय नमः।
४०६ ॐ गोपीमनोहरापाङ्गाय नमः।
४०७ ॐ वेणुवादनतत्पराय नमः।
४०८ ॐ विन्यस्तवदनाम्भोजाय नमः।
४०९ ॐ चारुशब्दकृताननाय नमः।
४१० ॐ बिम्बाधरार्पितदारुवेणवे नमः।
४११ ॐ विश्वविमोहनाय नमः।
४१२ ॐ व्रजसंवर्णिताय नमः।
४१३ ॐ श्राव्यवेणुनादश्रुतिप्रियाय नमः।
४१४ ॐ गोगोपगोपीजन्मेप्सवे नमः।
४१५ ॐ ब्रह्मेन्द्राद्यभिवन्दिताय नमः।
४१६ ॐ गीतस्त्रुतिसरित्पूराय नमः।
४१७ ॐ नादनर्तितबर्हिणाय नमः।
४१८ ॐ रागपल्लवितस्थाणवे नमः।
४१९ ॐ गीतानमितपादपाय नमः।
४२० ॐ विस्मारिततृणग्रासमृगाय नमः।
४२१ ॐ मृगविलोभिताय नमः।
४२२ ॐ व्याघ्रादिहिंस्त्रसहजवैरहर्त्रे नमः।
४२३ ॐ सुगायनाय नमः।
४२४ ॐ गाढोदीरितगोवृन्दाय नमः।
४२५ ॐ प्रेमोत्कर्णिततर्णकाय नमः।
४२६ ॐ निष्पन्दयानब्रह्मादिवीक्षि-

ताय नमः।
४२७ ॐ विश्ववन्दिताय नमः।
४२८ ॐ शाखोत्कर्णशकुन्तौघाय नमः।
४२९ ॐ छत्रायितवलाहकाय नमः।
४३० ॐ प्रसन्नाय नमः।
४३१ ॐ परमानन्दाय नमः।
४३२ ॐ चित्रायितचराचराय नमः।
४३३ ॐ गोपिकामदनाय नमः।
४३४ ॐ गोपीकुचकुङ्कुममुद्रिताय नमः।
४३५ ॐ गोपकन्याजलक्रीडाहृष्टाय नमः।
४३६ ॐ गोप्यंशुकापहृते नमः।
४३७ ॐ स्कन्धारोपितगोपस्त्री-
वाससे नमः।
४३८ ॐ कुन्दनिभस्मिताय नमः।
४३९ ॐ गोपीनेत्रोत्पलशशिने नमः।
४४० ॐ गोपिकायाचितांशुकाय नमः।
४४१ ॐ गोपीनमस्क्रियादेष्ट्रे नमः।
४४२ ॐ गोप्येककरवन्दिताय नमः।
४४३ ॐ गोप्यञ्जलिविशेषार्थिने नमः।
४४४ ॐ गोपीक्रीडाविलोभिताय नमः।
४४५ ॐ शान्तवासस्फुरद्गोपी-
कृताञ्जलये नमः।
४४६ ॐ अघापहाय नमः।
४४७ ॐ गोपीकेलिविलासार्थिने नमः।
४४८ ॐ गोपीसम्पूर्णकामदाय नमः।
४४९ ॐ गोपस्त्रीवस्त्रदाय नमः।
४५० ॐ गोपीचित्तचोराय नमः।
४५१ ॐ कुतूहलिने नमः।
४५२ ॐ वृन्दावनप्रियाय नमः।
४५३ ॐ गोपबन्धवे नमः।
४५४ ॐ यज्वान्नयाचित्रे नमः।
४५५ ॐ यज्ञेशाय नमः।
४५६ ॐ यज्ञभावज्ञाय नमः।
४५७ ॐ यज्ञपत्न्यभिवाञ्छिताय नमः।
४५८ ॐ मुनिपत्नीवितीर्णान्नतृप्ताय नमः।
४५९ ॐ मुनिवधूप्रियाय नमः।
४६० ॐ द्विजपत्न्यभिभावज्ञाय नमः।
४६१ ॐ द्विजपत्नीवरप्रदाय नमः।
४६२ ॐ प्रतिरुद्धसतीमोक्षप्रदाय नमः।
४६३ ॐ द्विजविमोहिताय नमः।
४६४ ॐ मुनिज्ञानप्रदाय नमः।
४६५ ॐ यज्वस्तुताय नमः।
४६६ ॐ वासवयागविदे नमः।
४६७ ॐ पितृप्रोक्तक्रियारूपशक्र-
यागनिवारणाय नमः।
४६८ ॐ शक्रामर्षकराय नमः।
४६९ ॐ शक्रवृष्टिप्रशमनोन्मुखाय नमः।
४७० ॐ गोवर्धनधराय नमः।
४७१ ॐ गोपगोवृन्दत्राणतत्पराय नमः।
४७२ ॐ गोवर्धनगिरिच्छत्रचण्ड-
दण्डभुजार्गलाय नमः।
४७३ ॐ सप्ताहविधृताद्रीन्द्राय नमः।
४७४ ॐ मेघवाहनगर्वघ्ने नमः।
४७५ ॐ भुजाग्रोपरिविन्यस्त-
क्ष्माधरक्ष्माभृते नमः।
४७६ ॐ अच्युताय नमः।

४७७ ॐ स्वस्थानस्थापितगिरये नमः।
४७८ ॐ गोपीदध्यक्षतार्चिताय नमः।
४७९ ॐ सुमनसे नमः।
४८० ॐ सुमनोवृष्टिहृष्टाय नमः।
४८१ ॐ वासववन्दिताय नमः।
४८२ ॐ कामधेनुपयःपूराभिषिक्ताय नमः।
४८३ ॐ सुरभिस्तुताय नमः।
४८४ ॐ धरांघ्रिये नमः।
४८५ ॐ ओषधीरोम्णे नमः।
४८६ ॐ धर्मगोप्त्रे नमः।
४८७ ॐ मनोमयाय नमः।
४८८ ॐ ज्ञानयज्ञप्रियाय नमः।
४८९ ॐ शास्त्रनेत्राय नमः।
४९० ॐ सर्वार्थसारथये नमः।
४९१ ॐ ऐरावतकरानीतविय-
दृङ्गाप्लुताय नमः।
४९२ ॐ विभवे नमः।
४९३ ॐ ब्रह्माभिषिक्ताय नमः।
४९४ ॐ गोगोप्त्रे नमः।
४९५ ॐ सर्वलोकशुभंकराय नमः।
४९६ ॐ सर्ववेदमयाय नमः।
४९७ ॐ मग्ननन्दान्वेषिणे नमः।
४९८ ॐ पितृप्रियाय नमः।
४९९ ॐ वरुणोदीरितात्मेक्षा-
कौतुकाय नमः।
५०० ॐ वरुणार्चिताय नमः।
५०१ ॐ वरुणानीतजनकाय नमः।
५०२ ॐ गोपज्ञातात्मवैभवाय नमः।
५०३ ॐ स्वर्लोकालोकसंहृष्ट-
गोपवर्गत्रिवर्गदाय नमः।
५०४ ॐ ब्रह्महृद्गोपिताय नमः।
५०५ ॐ गोपद्रष्ट्रे नमः।
५०६ ॐ ब्रह्मपदप्रदाय नमः।
५०७ ॐ शरच्चन्द्रविहारोत्काय नमः।
५०८ ॐ श्रीपतये नमः।
५०९ ॐ वशकाय नमः।
५१० ॐ क्षमाय नमः।
५११ ॐ भयापहाय नमः।
५१२ ॐ भर्तृरुद्धगोपिकाध्यान-
गोचराय नमः।
५१३ ॐ गोपिकानयनास्वाद्याय नमः।
५१४ ॐ गोपीनर्मोक्तिनिर्वृताय नमः।
५१५ ॐ गोपिकामानहरणाय नमः।
५१६ ॐ गोपिकाशतयूथपाय नमः।
५१७ ॐ वैजयन्तीस्त्रगाकल्पाय नमः।
५१८ ॐ गोपिकामानवर्धनाय नमः।
५१९ ॐ गोपकान्तासुनिर्देष्ट्रे नमः।
५२० ॐ कान्ताय नमः।
५२१ ॐ मन्मथमन्मथाय नमः।
५२२ ॐ स्वात्मास्यदत्तताम्बूलाय नमः।
५२३ ॐ फलितोत्कृष्टयौवनाय नमः।
५२४ ॐ वल्लवीस्तनसक्ताक्षाय नमः।
५२५ ॐ वल्लवीप्रेमचालिताय नमः।
५२६ ॐ गोपीचेलांचलासीनाय नमः।
५२७ ॐ गोपीनेत्राब्जषट्पदाय नमः।
५२८ ॐ रासक्रीडासमासक्ताय नमः।

५२९ ॐ गोपीमण्डलमण्डनाय नमः।
५३० ॐ गोपीहेममणिश्रेणि-
मध्येन्द्रमणये नमः।
५३१ ॐ उज्ज्वलाय नमः।
५३२ ॐ विद्याधरेन्दुशापघ्नाय नमः।
५३३ ॐ शंखचूडशिरोहराय नमः।
५३४ ॐ शंखचूडशिरोरत्न-
सम्प्रीणितबलाय नमः।
५३५ ॐ अनघाय नमः।
५३६ ॐ अरिष्टारिष्टकृते नमः।
५३७ ॐ दुष्टकेशिदैत्यनिषूदनाय
नमः।
५३८ ॐ सरसाय नमः।
५३९ ॐ सस्मितमुखाय नमः।
५४० ॐ सुस्थिराय नमः।
५४१ ॐ विरहाकुलाय नमः।
५४२ ॐ सङ्कर्षणार्पितप्रीतये नमः।
५४३ ॐ अक्रूरध्यानगोचराय नमः।
५४४ ॐ अक्रूरसंस्तुताय नमः।
५४५ ॐ गूढाय नमः।
५४६ ॐ गुणवृत्त्युपलक्षिताय नमः।
५४७ ॐ प्रमाणगम्याय नमः।
५४८ ॐ तन्मात्रावयविने नमः।
५४९ ॐ बुद्धितत्पराय नमः।
५५० ॐ सर्वप्रमाणप्रमथिने नमः।
५५१ ॐ सर्वप्रत्ययसाधकाय नमः।
५५२ ॐ पुरुषाय नमः।
५५३ ॐ प्रधानात्मने नमः।
५५४ ॐ विपर्यासविलोचनाय नमः।
५५५ ॐ मधुराजनसंवीक्ष्याय नमः।
५५६ ॐ रजकप्रतिघातकाय नमः।
५५७ ॐ विचित्राम्बरसंवीताय नमः।
५५८ ॐ मालाकारवरप्रदाय नमः।
५५९ ॐ कुब्जावक्रत्वनिर्मोक्त्रे नमः।
५६० ॐ कुब्जायौवनदायकाय नमः।
५६१ ॐ कुब्जाङ्गरागसुरभये नमः।
५६२ ॐ कंसकोदण्डखण्डनाय नमः।
५६३ ॐ धीराय नमः।
५६४ ॐ कुवलयापीडमर्दनाय नमः।
५६५ ॐ कंसभीतिकृते नमः।
५६६ ॐ दन्तिदन्तायुधाय नमः।
५६७ ॐ रङ्गत्रासकाय नमः।
५६८ ॐ मल्लयुद्धविदे नमः।
५६९ ॐ चाणूरहन्त्रे नमः।
५७० ॐ कंसारये नमः।
५७१ ॐ देवकीहर्षदायकाय नमः।
५७२ ॐ वसुदेवपदानम्राय नमः।
५७३ ॐ पितृबन्धविमोचनाय नमः।
५७४ ॐ उर्वीभयापहाय नमः।
५७५ ॐ भूपाय नमः।
५७६ ॐ उग्रसेनाधिपत्यदाय नमः।
५७७ ॐ आज्ञास्थितशचीनाथाय नमः।
५७८ ॐ सुधर्मानयनक्षमाय नमः।
५७९ ॐ आद्याय नमः।
५८० ॐ द्विजातिसत्कर्त्रे नमः।
५८१ ॐ शिष्टाचारप्रदर्शकाय नमः।

५८२ ॐ सान्दीपनिकृताभ्यस्त-
विद्याभ्यासैकधिये नमः।
५८३ ॐ सुधिये नमः।
५८४ ॐ गुर्वभीष्टक्रियादक्षाय नमः।
५८५ ॐ पश्चिमोदधिपूजिताय नमः।
५८६ ॐ हतपञ्चजनप्राप्तपाञ्चज-
न्याय नमः।
५८७ ॐ यमार्चिताय नमः।
५८८ ॐ धर्मराजजयानीतगुरु-
पुत्राय नमः।
५८९ ॐ उरुक्रमाय नमः।
५९० ॐ गुरुपुत्रप्रदाय नमः।
५९१ ॐ शास्त्रे नमः।
५९२ ॐ मधुराजसभासदाय नमः।
५९३ ॐ जामदग्न्यसमभ्यर्च्याय नमः।
५९४ ॐ गोमन्तगिरिसञ्चराय नमः।
५९५ ॐ गोमन्तदावशमनाय नमः।
५९६ ॐ गरुडानीतभूषणाय नमः।
५९७ ॐ चक्राद्यायुधसंशोभिने नमः।
५९८ ॐ जरासन्धमदापहाय नमः।
५९९ ॐ सृगालावनिपालघ्नाय नमः।
६०० ॐ सृगालात्मजराज्यदाय नमः।
६०१ ॐ विध्वस्तकालयवनाय नमः।
६०२ ॐ मुचुकुन्दवरप्रदाय नमः।
६०३ ॐ आज्ञापितमहाम्भोधये नमः।
६०४ ॐ द्वारकापुरकल्पनाय नमः।
६०५ ॐ द्वारकानिलयाय नमः।
६०६ ॐ रुक्मिमानहन्त्रे नमः।
६०७ ॐ यदूद्वहाय नमः।
६०८ ॐ रुचिराय नमः।
६०९ ॐ रुक्मिणीजानये नमः।
६१० ॐ प्रद्युम्नजनकाय नमः।
६११ ॐ प्रभवे नमः।
६१२ ॐ अपाकृतत्रिलोकार्तये नमः।
६१३ ॐ अनिरुद्धपितामहाय नमः।
६१४ ॐ अनिरुद्धपदान्वेषिणे नमः।
६१५ ॐ चक्रिणे नमः।
६१६ ॐ गरुडवाहनाय नमः।
६१७ ॐ बाणासुरपुरीरोद्ध्रे नमः।
६१८ ॐ रक्षाज्वलनयन्त्रजिते नमः।
६१९ ॐ धूतप्रमथसंरम्भाय नमः।
६२० ॐ जितमाहेश्वरज्वराय नमः।
६२१ ॐ षट्चक्रशक्तिनिर्जेत्रे नमः।
६२२ ॐ भूतवेतालमोहकृते नमः।
६२३ ॐ शम्भुत्रिशूलजिते नमः।
६२४ ॐ शम्भुजम्भणाय नमः।
६२५ ॐ शम्भुसंस्तुताय नमः।
६२६ ॐ इन्द्रियाय नमः।
६२७ ॐ आत्मने नमः।
६२८ ॐ इन्दुहृदयाय नमः।
६२९ ॐ सर्वयोगेश्वरेश्वराय नमः।
६३० ॐ हिरण्यगर्भहृदयाय नमः।
६३१ ॐ मोहावर्तनिवर्तनाय नमः।
६३२ ॐ आत्मज्ञाननिधये नमः।
६३३ ॐ मेधाकोशाय नमः।
६३४ ॐ तन्मात्ररूपवते नमः।

६३५ ॐ इन्द्राय नमः।
६३६ ॐ अग्निवदनाय नमः।
६३७ ॐ कालनाभाय नमः।
६३८ ॐ सर्वागमाय नमः।
६३९ ॐ अध्वगाय नमः।
६४० ॐ तुरीयाय नमः।
६४१ ॐ सर्वधीसाक्षिणे नमः।
६४२ ॐ द्वन्द्वारामाय नमः।
६४३ ॐ आत्मदूरगाय नमः।
६४४ ॐ अज्ञातपारवश्यश्रिये नमः।
६४५ ॐ अव्याकृतविहारवते नमः।
६४६ ॐ आत्मप्रदीपाय नमः।
६४७ ॐ विज्ञानमात्रात्मने नमः।
६४८ ॐ श्रीनिकेतनाय नमः।
६४९ ॐ बाणबाहुवनच्छेत्रे नमः।
६५० ॐ महेन्द्रप्रीतिवर्धनाय नमः।
६५१ ॐ अनिरुद्धनिरोधज्ञाय नमः।
६५२ ॐ जलेशाहृतगोकुलाय नमः।
६५३ ॐ जलेशविजयिने नमः।
६५४ ॐ वीराय नमः।
६५५ ॐ सत्राजिद्रत्नयाचकाय नमः।
६५६ ॐ प्रसेनान्वेषणोद्युक्ताय नमः।
६५७ ॐ जाम्बवद्धृतरत्नदाय नमः।
६५८ ॐ जितर्क्षराजतनयाहर्त्रे नमः।
६५९ ॐ जाम्बवतीप्रियाय नमः।
६६० ॐ सत्यभामाप्रियाय नमः।
६६१ ॐ कामाय नमः।
६६२ ॐ शतधन्वशिरोहराय नमः।
६६३ ॐ कालिन्दीपतये नमः।
६६४ ॐ अक्रूरबन्धवे नमः।
६६५ ॐ अक्रूररत्नदाय नमः।
६६६ ॐ कैकेयीरमणाय नमः।
६६७ ॐ भद्राभर्त्रे नमः।
६६८ ॐ नाग्नजितीधवाय नमः।
६६९ ॐ माद्रीमनोहराय नमः।
६७० ॐ शैब्याप्राणबन्धवे नमः।
६७१ ॐ उरुक्रमाय नमः।
६७२ ॐ सुशीलादयिताय नमः।
६७३ ॐ मित्रविन्दानेत्रमहोत्सवाय नमः।
६७४ ॐ लक्ष्मणावल्लभाय नमः।
६७५ ॐ रुद्धप्राग्ज्योतिषमहापुराय नमः।
६७६ ॐ सुरपाशावृतिच्छेदिने नमः।
६७७ ॐ मुरारये नमः।
६७८ ॐ क्रूरयुद्धविदे नमः।
६७९ ॐ हयग्रीवशिरोहर्त्रे नमः।
६८० ॐ सर्वात्मने नमः।
६८१ ॐ सर्वदर्शनाय नमः।
६८२ ॐ नरकासुरविच्छेत्रे नमः।
६८३ ॐ नरकात्मजराज्यदाय नमः।
६८४ ॐ पृथ्वीस्तुताय नमः।
६८५ ॐ प्रकाशात्मने नमः।
६८६ ॐ हृद्याय नमः।
६८७ ॐ यज्ञफलप्रदाय नमः।
६८८ ॐ गुणग्राहिणे नमः।
६८९ ॐ गुणद्रष्ट्रे नमः।
६९० ॐ गूढस्वात्माविभूतिमते नमः।

६९१ ॐ कवये नमः।
६९२ ॐ जगदुपद्रष्ट्रे नमः।
६९३ ॐ परमाक्षरविग्रहाय नमः।
६९४ ॐ प्रपन्नपालनाय नमः।
६९५ ॐ मालिने नमः।
६९६ ॐ महद्ब्रह्मविवर्धनाय नमः।
६९७ ॐ वाच्यवाचकशक्त्यर्थाय नमः।
६९८ ॐ सर्वव्याकृतसिद्धिदाय नमः।
६९९ ॐ स्वयंप्रभवे नमः।
७०० ॐ अनिर्वेद्याय नमः।
७०१ ॐ स्वप्रकाशाय नमः।
७०२ ॐ चिरन्तनाय नमः।
७०३ ॐ नादात्मने नमः।
७०४ ॐ मन्त्रकोटीशाय नमः।
७०५ ॐ नानावादनिरोधकाय नमः।
७०६ ॐ कन्दर्पकोटिलावण्याय नमः।
७०७ ॐ परार्थैकप्रयोजकाय नमः।
७०८ ॐ अमरीकृतदेवौघाय नमः।
७०९ ॐ कन्यकाबन्धमोचनाय नमः।
७१० ॐ षोडशस्त्रीसहस्त्रेशाय नमः।
७११ ॐ कान्ताय नमः।
७१२ ॐ कान्तामनोभवाय नमः।
७१३ ॐ क्रीडारत्नाचलाहर्त्रे नमः।
७१४ ॐ वरुणच्छत्रशोभिताय नमः।
७१५ ॐ शक्राभिवन्दिताय नमः।
७१६ ॐ शक्रजननीकुण्डलप्रदाय नमः।
७१७ ॐ अदितिप्रस्तुतस्तोत्राय नमः।
७१८ ॐ ब्राह्मणोद्घुष्टचेष्टनाय नमः।
७१९ ॐ पुराणाय नमः।
७२० ॐ संयमिने नमः।
७२१ ॐ जन्मालिप्ताय नमः।
७२२ ॐ षड्विंशकाय नमः।
७२३ ॐ अर्थदाय नमः।
७२४ ॐ यशस्यनीतये नमः।
७२५ ॐ आद्यन्तरहिताय नमः।
७२६ ॐ सत्कथाप्रियाय नमः।
७२७ ॐ ब्रह्मबोधाय नमः।
७२८ ॐ परानन्दाय नमः।
७२९ ॐ पारिजातापहारकाय नमः।
७३० ॐ पौण्ड्रकप्राणहरणाय नमः।
७३१ ॐ काशिराजनिषूदनाय नमः।
७३२ ॐ कृत्यागर्वप्रशमनाय नमः।
७३३ ॐ विचक्रवधदीक्षिताय नमः।
७३४ ॐ हंसविध्वंसनाय नमः।
७३५ ॐ साम्बजनकाय नमः।
७३६ ॐ डिम्भकार्दनाय नमः।
७३७ ॐ मुनये नमः।
७३८ ॐ गोप्त्रे नमः।
७३९ ॐ पितृवरप्रदाय नमः।
७४० ॐ सवनदीक्षिताय नमः।
७४१ ॐ रथिने नमः।
७४२ ॐ सारथ्यनिर्देष्ट्रे नमः।
७४३ ॐ फाल्गुनाय नमः।
७४४ ॐ फाल्गुनिप्रियाय नमः।
७४५ ॐ सप्ताब्धिस्तम्भनोद्भूताय नमः।
७४६ ॐ हरये नमः।

७४७ ॐ सप्ताब्धिभेदनाय नमः।
७४८ ॐ आत्मप्रकाशाय नमः।
७४९ ॐ पूर्णश्रिये नमः।
७५० ॐ आदिनारायणेक्षिताय नमः।
७५१ ॐ विप्रपुत्रप्रदाय नमः।
७५२ ॐ सर्वमातृसुतप्रदाय नमः।
७५३ ॐ पार्थविस्मयकृते नमः।
७५४ ॐ पार्थप्रणवार्थप्रबोधनाय नमः।
७५५ ॐ कैलासयात्रासुमुखाय नमः।
७५६ ॐ बदर्याश्रमभूषणाय नमः।
७५७ ॐ घण्टाकर्णक्रियामौढ्य-तोषिताय नमः।
७५८ ॐ भक्तवत्सलाय नमः।
७५९ ॐ मुनिवृन्दादिभिर्ध्येयाय नमः।
७६० ॐ घण्टाकर्णवरप्रदाय नमः।
७६१ ॐ तपश्चर्यापराय नमः।
७६२ ॐ चीरवाससे नमः।
७६३ ॐ पिङ्गजटाधराय नमः।
७६४ ॐ प्रत्यक्षीकृतभूतेशाय नमः।
७६५ ॐ शिवस्तोत्रे नमः।
७६६ ॐ शिवस्तुताय नमः।
७६७ ॐ कृष्णास्वयंवरालोक-कौतुकिने नमः।
७६८ ॐ सर्वसम्मताय नमः।
७६९ ॐ बलसंरम्भशमनाय नमः।
७७० ॐ बलदर्शितपाण्डवाय नमः।
७७१ ॐ यतिवेषार्जुनाभीष्टदायिने नमः।
७७२ ॐ सर्वात्मगोचराय नमः।
७७३ ॐ सुभद्राफाल्गुनोद्वाहकर्त्रे नमः।
७७४ ॐ प्रीणितफाल्गुनाय नमः।
७७५ ॐ खाण्डवप्रीणितार्चिष्मते नमः।
७७६ ॐ मयदानवमोचनाय नमः।
७७७ ॐ सुलभाय नमः।
७७८ ॐ राजसूयार्हाय नमः।
७७९ ॐ युधिष्ठिरनियोजकाय नमः।
७८० ॐ भीमार्दितजरासन्धाय नमः।
७८१ ॐ मागधात्मजराज्यदाय नमः।
७८२ ॐ राजबन्धननिर्मोक्त्रे नमः।
७८३ ॐ राजसूयाग्रपूजनाय नमः।
७८४ ॐ चैद्याद्यसहनाय नमः।
७८५ ॐ भीष्मस्तुताय नमः।
७८६ ॐ सात्वतपूर्वजाय नमः।
७८७ ॐ सर्वात्मने नमः।
७८८ ॐ अर्थसमाहर्त्रे नमः।
७८९ ॐ मन्दराचलधारकाय नमः।
७९० ॐ यज्ञावताराय नमः।
७९१ ॐ प्रह्लादप्रतिज्ञापरिपालकाय नमः।
७९२ ॐ बलियज्ञसभाध्वंसिने नमः।
७९३ ॐ दृप्तक्षत्रकुलान्तकाय नमः।
७९४ ॐ दशग्रीवान्तकाय नमः।
७९५ ॐ जेत्रे नमः।
७९६ ॐ रेवतीप्रेमवल्लभाय नमः।
७९७ ॐ सर्वावताराधिष्ठात्रे नमः।
७९८ ॐ वेदबाह्यविमोहनाय नमः।
७९९ ॐ कलिदोषनिराकर्त्रे नमः।
८०० ॐ दशनाम्ने नमः।

८०१ ॐ दृढव्रताय नमः।
८०२ ॐ अमेयात्मने नमः।
८०३ ॐ जगत्स्वामिने नमः।
८०४ ॐ वाग्मिने नमः।
८०५ ॐ चैद्यशिरोहराय नमः।
८०६ ॐ द्रौपदीरचितस्तोत्राय नमः।
८०७ ॐ केशवाय नमः।
८०८ ॐ पुरुषोत्तमाय नमः।
८०९ ॐ नारायणाय नमः।
८१० ॐ मधुपतये नमः।
८११ ॐ माधवाय नमः।
८१२ ॐ दोषवर्जिताय नमः।
८१३ ॐ गोविन्दाय नमः।
८१४ ॐ पुण्डरीकाक्षाय नमः।
८१५ ॐ विष्णवे नमः।
८१६ ॐ मधुसूदनाय नमः।
८१७ ॐ त्रिविक्रमाय नमः।
८१८ ॐ त्रिलोकेशाय नमः।
८१९ ॐ वामनाय नमः।
८२० ॐ श्रीधराय नमः।
८२१ ॐ पुंसे नमः।
८२२ ॐ हृषीकेशाय नमः।
८२३ ॐ वासुदेवाय नमः।
८२४ ॐ पद्मनाभाय नमः।
८२५ ॐ महाह्रदाय नमः।
८२६ ॐ दामोदराय नमः।
८२७ ॐ चतुर्व्यूहाय नमः।
८२८ ॐ पाञ्चालीमानरक्षणाय नमः।
८२९ ॐ शाल्वघ्नाय नमः।
८३० ॐ समरश्लाघिने नमः।
८३१ ॐ दन्तवक्त्रनिबर्हणाय नमः।
८३२ ॐ दामोदरप्रियसखाय नमः।
८३३ ॐ पृथुकास्वादनप्रियाय नमः।
८३४ ॐ घृणिने नमः।
८३५ ॐ दामोदराय नमः।
८३६ ॐ श्रीदाय नमः।
८३७ ॐ गोपीपुनरवेक्षकाय नमः।
८३८ ॐ गोपिकामुक्तिदाय नमः।
८३९ ॐ योगिने नमः।
८४० ॐ दुर्वासस्तृप्तिकारकाय नमः।
८४१ ॐ अविज्ञातव्रजाकीर्ण-
पाण्डवालोकनाय नमः।
८४२ ॐ जयिने नमः।
८४३ ॐ पार्थसारथ्यनिरताय नमः।
८४४ ॐ प्राज्ञाय नमः।
८४५ ॐ पाण्डवदौत्यकृते नमः।
८४६ ॐ विदुरातिथ्यसंतुष्टाय नमः।
८४७ ॐ कुन्तीसन्तोषदायकाय नमः।
८४८ ॐ सुयोधनतिरस्कर्त्रे नमः।
८४९ ॐ दुर्योधनविकारविदे नमः।
८५० ॐ विदुराभिष्टुताय नमः।
८५१ ॐ नित्याय नमः।
८५२ ॐ वार्ष्णेयाय नमः।
८५३ ॐ मङ्गलात्मकाय नमः।
८५४ ॐ पञ्चविंशतितत्त्वेशाय नमः।
८५५ ॐ चतुर्विंशतिदेहभाजे नमः।

८५६ ॐ सर्वानुग्राहकाय नमः।
८५७ ॐ सर्वदाशार्हसततार्चिताय नमः।
८५८ ॐ अचिन्त्याय नमः।
८५९ ॐ मधुरालापाय नमः।
८६० ॐ साधुदर्शिने नमः।
८६१ ॐ दुरासदाय नमः।
८६२ ॐ मनुष्यधर्मानुगताय नमः।
८६३ ॐ कौरवेन्द्रक्षयेक्षिताय नमः।
८६४ ॐ उपेन्द्राय नमः।
८६५ ॐ दानवारातये नमः।
८६६ ॐ उरुगीताय नमः।
८६७ ॐ महाद्युतये नमः।
८६८ ॐ ब्रह्मण्यदेवाय नमः।
८६९ ॐ श्रुतिमते नमः।
८७० ॐ गोब्राह्मणहिताशयाय नमः।
८७१ ॐ वरशीलाय नमः।
८७२ ॐ शिवारम्भाय नमः।
८७३ ॐ सुविज्ञानविमूर्तिमते नमः।
८७४ ॐ स्वभावशुद्धाय नमः।
८७५ ॐ सन्मित्राय नमः।
८७६ ॐ सुशरण्याय नमः।
८७७ ॐ सुलक्षणाय नमः।
८७८ ॐ धृतराष्ट्रगताय नमः।
८७९ ॐ दृष्टिप्रदाय नमः।
८८० ॐ कर्णविभेदनाय नमः।
८८१ ॐ प्रतोदधृते नमः।
८८२ ॐ विश्वरूपविस्मारित-धनञ्जयाय नमः।
८८३ ॐ सामगानप्रियाय नमः।
८८४ ॐ धर्मधेनवे नमः।
८८५ ॐ वर्णोत्तमाय नमः।
८८६ ॐ अव्ययाय नमः।
८८७ ॐ चतुर्युगक्रियाकर्त्रे नमः।
८८८ ॐ विश्वरूपप्रदर्शकाय नमः।
८८९ ॐ ब्रह्मबोधपरित्रातपार्थाय नमः।
८९० ॐ भीष्मार्थचक्रभृते नमः।
८९१ ॐ अर्जुनायासविध्वंसिने नमः।
८९२ ॐ कालदंष्ट्राविभूषणाय नमः।
८९३ ॐ सुजातानन्तमहिम्ने नमः।
८९४ ॐ स्वप्नव्यापारितार्जुनाय नमः।
८९५ ॐ अकालसन्ध्याघटनाय नमः।
८९६ ॐ चक्रान्तरितभास्कराय नमः।
८९७ ॐ दुष्टप्रमथनाय नमः।
८९८ ॐ पार्थप्रतिज्ञापरिपालकाय नमः।
८९९ ॐ सिन्धुराजशिरःपातस्थान-वक्त्रे नमः।
९०० ॐ विवेकदृशे नमः।
९०१ ॐ सुभद्राशोकहरणाय नमः।
९०२ ॐ द्रोणोत्सेकादिविस्मिताय नमः।
९०३ ॐ पार्थमन्युनिराकर्त्रे नमः।
९०४ ॐ पाण्डवोत्सवदायकाय नमः।
९०५ ॐ अङ्गुष्ठाक्रान्तकौन्तेयरथचक्राय नमः।
९०६ ॐ अहिशीर्षजिते नमः।
९०७ ॐ कालकोपप्रशमनाय नमः।
९०८ ॐ भीमसेनजयप्रदाय नमः।

१०९ ॐ अश्वत्थामवधायासत्रातपाण्डुसुताय नमः।
११० ॐ कृतिने नमः।
१११ ॐ इषीकास्त्रप्रशमनाय नमः।
११२ ॐ द्रौणिरक्षाविचक्षणाय नमः।
११३ ॐ पार्थापहारितद्रौणिचूडामणये नमः।
११४ ॐ अभङ्गुराय नमः।
११५ ॐ धृतराष्ट्रपरामृष्टभीमप्रतिकृतिस्मयाय नमः।
११६ ॐ भीष्मबुद्धिप्रदाय नमः।
११७ ॐ शान्ताय नमः।
११८ ॐ शरच्चन्द्रनिभाननाय नमः।
११९ ॐ गदाग्रजन्मने नमः।
१२० ॐ पाञ्चालीप्रतिज्ञापरिपालकाय नमः।
१२१ ॐ गान्धारीकोपदृग्गुप्तधर्मसूनवे नमः।
१२२ ॐ अनामयाय नमः।
१२३ ॐ प्रपन्नार्तिभयच्छेत्रे नमः।
१२४ ॐ भीष्मशल्यव्यथापहाय नमः।
१२५ ॐ शान्ताय नमः।
१२६ ॐ शान्तनवोदीर्णाय नमः।
१२७ ॐ सर्वधर्मसमाहिताय नमः।
१२८ ॐ स्मारितब्रह्मविद्यार्थप्रीतपार्थाय नमः।
१२९ ॐ महास्त्रविदे नमः।
१३० ॐ प्रसादपरमोदाराय नमः।
१३१ ॐ गाङ्गेयसुगतिप्रदाय नमः।
१३२ ॐ विपक्षपक्षक्षयकृते नमः।
१३३ ॐ परीक्षित्प्राणरक्षणाय नमः।
१३४ ॐ जगद्गुरवे नमः।
१३५ ॐ धर्मसूनोर्वाजिमेधप्रवर्तकाय नमः।
१३६ ॐ विहितार्थाय नमः।
१३७ ॐ आप्तसत्काराय नमः।
१३८ ॐ मासकात्परिवर्तदाय नमः।
१३९ ॐ उत्तङ्कहर्षदात्मीयदिव्यरूपप्रदर्शकाय नमः।
१४० ॐ जनकावगतस्वोक्तभारताय नमः।
१४१ ॐ सर्वभावनाय नमः।
१४२ ॐ असोढ्यादवोद्रेकाय नमः।
१४३ ॐ विहिताप्तादिपूजनाय नमः।
१४४ ॐ समुद्रस्थापिताय नमः।
१४५ ॐ आश्चर्यमुसलाय नमः।
१४६ ॐ वृष्णिवाहकाय नमः।
१४७ ॐ मुनिशापायुधाय नमः।
१४८ ॐ पद्मासनादित्रिदशार्थिताय नमः।
१४९ ॐ सृष्टिप्रत्यवहारोत्कटाय नमः।
१५० ॐ स्वधामगमनोत्सुकाय नमः।
१५१ ॐ प्रभासालोकनोद्युक्ताय नमः।
१५२ ॐ नानाविधनिमित्तकृते नमः।
१५३ ॐ सर्वयादवसंसेव्याय नमः।
१५४ ॐ सर्वोत्कृष्टपरिच्छदाय नमः।
१५५ ॐ वेलाकाननसञ्चारिणे नमः।
१५६ ॐ वेलानिलहृतश्रमाय नमः।
१५७ ॐ कालात्मने नमः।

९५८ ॐ यादवाय नमः।
९५९ ॐ अनन्ताय नमः।
९६० ॐ स्तुतिसंतुष्टमानसाय नमः।
९६१ ॐ द्विजालोकनसन्तुष्टाय नमः।
९६२ ॐ पुण्यतीर्थमहोत्सवाय नमः।
९६३ ॐ सत्काराह्लादिताशेषभूसुराय नमः।
९६४ ॐ सुरवल्लभाय नमः।
९६५ ॐ पुण्यतीर्थाप्लुताय नमः।
९६६ ॐ पुण्याय नमः।
९६७ ॐ पुण्यदाय नमः।
९६८ ॐ तीर्थपावनाय नमः।
९६९ ॐ विप्रसात्कृतगोकोटये नमः।
९७० ॐ शतकोटिसुवर्णदाय नमः।
९७१ ॐ स्वमायामोहिताशेषवृष्णिवीराय नमः।
९७२ ॐ विशेषविदे नमः।
९७३ ॐ जलजायुधनिर्देष्ट्रे नमः।
९७४ ॐ स्वात्मावेशितयादवाय नमः।
९७५ ॐ देवताभीष्टवरदाय नमः।
९७६ ॐ कृतकृत्याय नमः।
९७७ ॐ प्रसन्नधिये नमः।
९७८ ॐ स्थिरशेषायुतबलाय नमः।
९७९ ॐ सहस्त्रफणिवीक्षणाय नमः।
९८० ॐ ब्रह्मवृक्षवरच्छायासीनाय नमः।
९८१ ॐ पद्मासनस्थिताय नमः।
९८२ ॐ प्रत्यगात्मने नमः।
९८३ ॐ स्वभावार्थाय नमः।
९८४ ॐ प्रणिधानपरायणाय नमः।
९८५ ॐ व्याधेषुविद्धपूज्यांघ्रये नमः।
९८६ ॐ निषादभयमोचनाय नमः।
९८७ ॐ पुलिन्दस्तुतिसंतुष्टाय नमः।
९८८ ॐ पुलिन्दसुगतिप्रदाय नमः।
९८९ ॐ दारुकार्पितपार्थादिकरणीयोक्तये नमः।
९९० ॐ ईशित्रे नमः।
९९१ ॐ दिव्यदुन्दुभिसंयुक्ताय नमः।
९९२ ॐ पुष्पवृष्टिप्रपूजिताय नमः।
९९३ ॐ पुराणाय नमः।
९९४ ॐ परमेशानाय नमः।
९९५ ॐ पूर्णभूम्ने नमः।
९९६ ॐ परिष्टुताय नमः।
९९७ ॐ आद्यपतये नमः।
९९८ ॐ परस्मै ब्रह्मणे नमः।
९९९ ॐ परमात्मने नमः।
१००० ॐ परात्परस्मै नमः।

*॥ इति श्रीविष्णुधर्मोत्तरपुराणे श्रीकृष्णसहस्त्रनामावलिः सम्पूर्णा॥*

॥ श्रीलक्ष्मीनृसिंहाय नमः ॥

# श्रीलक्ष्मीनृसिंहसहस्त्रनामस्तोत्रम्

ध्यानम्

श्रीमत्पयोनिधिनिकेतन चक्रपाणे
भोगीन्द्रभोगमणिरञ्जितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥*

स्तोत्रम्

ब्रह्मोवाच

ॐ नमो नारसिंहाय वज्रदंष्ट्राय वज्रिणे।
वज्रदेहाय वज्राय नमो वज्रनखाय च ॥ १ ॥
वासुदेवाय वन्द्याय वरदाय वरात्मने।
वरदाभयहस्ताय वराय वररूपिणे ॥ २ ॥
वरेण्याय वरिष्ठाय श्रीवराय नमो नमः।
प्रह्लादवरदायैव प्रत्यक्षवरदाय च ॥ ३ ॥
परात्परपरेशाय पवित्राय पिनाकिने।
पावनाय प्रसन्नाय पाशिने पापहारिणे ॥ ४ ॥
पुरुष्टुताय पुण्याय पुरुहूताय ते नमः।
तत्पुरुषाय तथ्याय पुराणपुरुषाय च ॥ ५ ॥

---

* हे अति शोभायमान क्षीरसमुद्रमें निवास करनेवाले, हाथमे चक्र धारण करनेवाले, नागनाथ (शेषजी) के फणोंकी मणियोंसे देदीप्यमान मनोहर मूर्तिवाले! हे योगीश! हे सनातन! हे शरणागतवत्सल! हे संसारसागरके लिये नौकास्वरूप! श्रीलक्ष्मीनृसिंह! मुझे अपने करकमलका सहारा दीजिये।

पुरोधसे पूर्वजाय पुष्कराक्षाय ते नमः।
पुष्पहासाय हासाय महाहासाय शार्ङ्गिणे॥ ६ ॥
सिंहाय सिंहराजाय जगद्वश्याय ते नमः।
अट्टहासाय रोषाय जलवासाय ते नमः॥ ७ ॥
भूतावासाय भासाय श्रीनिवासाय खड्गिने।
खड्गजिह्वाय सिंहाय खड्गवासाय ते नमः॥ ८ ॥
नमो मूलाधिवासाय धर्मवासाय धन्विने।
धनञ्जयाय धन्याय नमो मृत्युञ्जयाय च॥ ९ ॥
शुभञ्जयाय सूत्राय नमः शत्रुञ्जयाय च।
निरञ्जनाय नीराय निर्गुणाय गुणाय च॥ १० ॥
निष्प्रपञ्चाय निर्वाणपदाय निबिडाय च।
निरालम्बाय नीलाय निष्कलाय कलाय च॥ ११ ॥
निमेषाय निबन्धाय निमेषगमनाय च।
निर्द्वन्द्वाय निराशाय निश्चयाय निराय च॥ १२ ॥
निर्मलाय निबन्धाय निर्मोहाय निराकृते।
नमो नित्याय सत्याय सत्कर्मनिरताय च॥ १३ ॥
सत्यध्वजाय मुञ्जाय मुञ्जकेशाय केशिने।
हरीशाय च शेषाय गुडाकेशाय वै नमः॥ १४ ॥
सुकेशायोर्ध्वकेशाय केशिसंहारकाय च।
जलेशाय स्थलेशाय पद्मेशायोग्ररूपिणे॥ १५ ॥
कुशेशयाय कूलाय केशवाय नमो नमः।
सूक्तिकर्णाय सूक्ताय रक्तजिह्वाय रागिणे॥ १६ ॥

दीप्तरूपाय दीप्ताय प्रदीप्ताय प्रलोभिने।
प्रच्छिन्नाय प्रबोधाय प्रभवे विभवे नमः॥ १७॥
प्रभञ्जनाय पान्थाय प्रमायाप्रमिताय च।
प्रकाशाय प्रतापाय प्रज्वालायोज्ज्वलाय च॥ १८॥
ज्वालामालास्वरूपाय ज्वलज्जिह्वाय ज्वालिने।
महोज्ज्वलाय कालाय कालमूर्तिधराय च॥ १९॥
कालान्तकाय कल्पाय कलनाय कृते नमः।
कालचक्राय चक्राय वषट्चक्राय चक्रिणे॥ २०॥
अक्रूराय कृतान्ताय विक्रमाय क्रमाय च।
कृत्तिने कृत्तिवासाय कृतघ्नाय कृतात्मने॥ २१॥
संक्रमाय च क्रुद्धाय क्रान्तलोकत्रयाय च।
अरूपाय स्वरूपाय हरये परमात्मने॥ २२॥
अजयायादिदेवाय अक्षयाय क्षयाय च।
अघोराय सुघोराय घोरघोरतराय च॥ २३॥
नमोऽस्त्वघोरवीर्याय लसद्घोराय ते नमः।
घोराध्यक्षाय दक्षाय दक्षिणार्याय शम्भवे॥ २४॥
अमोघाय गुणौघाय अनघायाघहारिणे।
मेघनादाय नादाय तुभ्यं मेधात्मने नमः॥ २५॥
मेघवाहनरूपाय मेघश्यामाय मालिने।
व्यालयज्ञोपवीताय व्याघ्रदेहाय वै नमः॥ २६॥
व्याघ्रपादाय च व्याघ्रकर्मिणे व्यापकाय च।
विकटास्याय वीराय विष्टरश्रवसे नमः॥ २७॥

विकीर्णनखदंष्ट्राय नखदंष्ट्रायुधाय च।
विष्वक्सेनाय सेनाय विह्वलाय बलाय च॥ २८॥
विरूपाक्षाय वीराय विशेषाक्षाय साक्षिणे।
वीतशोकाय विस्तीर्णवदनाय नमो नमः॥ २९॥
विधानाय विधेयाय विजयाय जयाय च।
विबुधाय विभावाय नमो विश्वम्भराय च॥ ३०॥
वीतरागाय विप्राय विटङ्कनयनाय च।
विपुलाय विनीताय विश्वयोने नमो नमः॥ ३१॥
चिदम्बराय वित्ताय विश्रुताय वियोनये।
विह्वलाय विकल्पाय कल्पातीताय शिल्पिने॥ ३२॥
कल्पनाय स्वरूपाय फणितल्पाय वै नमः।
तटित्प्रभाय तार्याय तरुणाय तरस्विने॥ ३३॥
तपनाय तरक्षाय तापत्रयहराय च।
तारकाय तमोघ्नाय तत्त्वाय च तपस्विने॥ ३४॥
तक्षकाय तनुत्राय तटिने तरलाय च।
शतरूपाय शान्ताय शतधाराय ते नमः॥ ३५॥
शतपत्राय तार्क्ष्याय स्थितये शतमूर्तये।
शतक्रतुस्वरूपाय शाश्वताय शतात्मने॥ ३६॥
नमः सहस्त्रशिरसे सहस्त्रवदनाय च।
सहस्त्राक्षाय देवाय दिशश्श्रोत्राय ते नमः॥ ३७॥
नमः सहस्त्रजिह्वाय महाजिह्वाय ते नमः।
सहस्त्रनामधेयाय सहस्त्राक्षिधराय च॥ ३८॥

सहस्त्रबाहवे तुभ्यं सहस्त्रचरणाय च।
सहस्त्रार्कप्रकाशाय सहस्त्रायुधधारिणे॥ ३९॥
नमः स्थूलाय सूक्ष्माय सुसूक्ष्माय नमो नमः।
सुक्षुण्णाय सुभिक्षाय सुराध्यक्षाय शौरिणे॥ ४०॥
धर्माध्यक्षाय धर्माय लोकाध्यक्षाय वै नमः।
प्रजाध्यक्षाय शिक्षाय विपक्षक्षयमूर्तये॥ ४१॥
कालाध्यक्षाय तीक्ष्णाय मूलाध्यक्षाय ते नमः।
अधोक्षजाय मित्राय सुमित्रवरुणाय च॥ ४२॥
शत्रुघ्नाय अविघ्नाय विघ्नकोटिहराय च।
रक्षोघ्नाय तमोघ्नाय भूतघ्नाय नमो नमः॥ ४३॥
भूतपालाय भूताय भूतवासाय भूतिने।
भूतवेतालघाताय भूताधिपतये नमः॥ ४४॥
भूतग्रहविनाशाय भूतसंयमिने नमः।
महाभूताय भृगवे सर्वभूतात्मने नमः॥ ४५॥
सर्वारिष्टविनाशाय सर्वसम्पत्कराय च।
सर्वाधाराय शर्वाय सर्वार्तिहरये नमः॥ ४६॥
सर्वदुःखप्रशान्ताय सर्वसौभाग्यदायिने।
सर्वज्ञायाप्यनन्ताय सर्वशक्तिधराय च॥ ४७॥
सर्वैश्वर्यप्रदात्रे च सर्वकार्यविधायिने।
सर्वज्वरविनाशाय सर्वरोगापहारिणे॥ ४८॥
सर्वाभिचारहन्त्रे च सर्वैश्वर्यविधायिने।
पिङ्गाक्षायैकशृङ्गाय द्विशृङ्गाय मरीचये॥ ४९॥

बहुश्रृङ्गाय लिङ्गाय महाश्रृङ्गाय ते नमः।
माङ्गल्याय मनोज्ञाय मन्तव्याय महात्मने॥ ५०॥
महादेवाय देवाय मातुलुङ्गधराय च।
महामायाप्रसूताय प्रस्तुताय च मायिने॥ ५१॥
अनन्तानन्तरूपाय मायिने जलशायिने।
महोदराय मन्दाय मददाय मदाय च॥ ५२॥
मधुकैटभहन्त्रे च माधवाय मुरारये।
महावीर्याय धैर्याय चित्रवीर्याय ते नमः॥ ५३॥
चित्रकूर्माय चित्राय नमस्ते चित्रभानवे।
मायातीताय मायाय महावीराय ते नमः॥ ५४॥
महातेजाय बीजाय तेजोधाम्ने च बीजिने।
तेजोमयनृसिंहाय नमस्ते चित्रभानवे॥ ५५॥
महादंष्ट्राय तुष्टाय नमः पुष्टिकराय च।
शिपिविष्टाय हृष्टाय पुष्टाय परमेष्ठिने॥ ५६॥
विशिष्टाय च शिष्टाय गरिष्ठायेष्टदायिने।
नमो ज्येष्ठाय श्रेष्ठाय तुष्टायामिततेजसे॥ ५७॥
अष्टाङ्गन्यस्तरूपाय सर्वदुष्टान्तकाय च।
वैकुण्ठाय विकुण्ठाय केशिकण्ठाय ते नमः॥ ५८॥
कण्ठीरवाय लुण्ठाय निःशठाय हठाय च।
सत्त्वोद्रिक्ताय रुद्राय ऋग्यजुःसामगाय च॥ ५९॥
ऋतुध्वजाय वज्राय मन्त्रराजाय मन्त्रिणे।
त्रिनेत्राय त्रिवर्गाय त्रिधाम्ने च त्रिशूलिने॥ ६०॥

त्रिकालज्ञानरूपाय त्रिदेहाय त्रिधात्मने।
नमस्त्रिमूर्तिविद्याय त्रितत्त्वज्ञानिने नमः॥ ६१॥
अक्षोभ्यायानिरुद्धाय अप्रमेयाय भानवे।
अमृताय अनन्ताय अमितायामितौजसे॥ ६२॥
अपमृत्युविनाशाय अपस्मारविघातिने।
अन्नदायान्नरूपाय अन्नायान्नभुजे नमः॥ ६३॥
नाद्याय निरवद्याय विद्यायाद्भुतकर्मणे।
सद्योजाताय सङ्घाय वैद्युताय नमो नमः॥ ६४॥
अध्वातीताय सत्त्वाय वागतीताय वाग्मिने।
वागीश्वराय गोपाय गोहिताय गवाम्पते॥ ६५॥
गन्धर्वाय गभीराय गर्जितायोर्जिताय च।
पर्जन्याय प्रबुद्धाय प्रधानपुरुषाय च॥ ६६॥
पद्माभाय सुनाभाय पद्मनाभाय मानिने।
पद्मनेत्राय पद्माय पद्मायाः पतये नमः॥ ६७॥
पद्मोदराय पूताय पद्मकल्पोद्भवाय च।
नमो हृत्पद्मवासाय भूपद्मोद्धरणाय च॥ ६८॥
शब्दब्रह्मस्वरूपाय ब्रह्मरूपधराय च।
ब्रह्मणे ब्रह्मरूपाय पद्मनेत्राय ते नमः॥ ६९॥
ब्रह्मदाय ब्राह्मणाय ब्रह्मब्रह्मात्मने नमः।
सुब्रह्मण्याय देवाय ब्रह्मण्याय त्रिवेदिने॥ ७०॥
परब्रह्मस्वरूपाय परब्रह्मात्मने नमः।
नमस्ते ब्रह्मशिरसे तथाऽश्वशिरसे नमः॥ ७१॥

अथर्वशिरसे नित्यमशनिप्रमिताय च।
नमस्ते तीक्ष्णदंष्ट्राय लोलाय ललिताय च॥ ७२॥
लावण्याय लवित्राय नमस्ते भासकाय च।
लक्षणज्ञाय लक्षाय लक्षणाय नमो नमः॥ ७३॥
लसद्दीप्ताय लिप्ताय विष्णवे प्रभविष्णवे।
वृष्णिमूलाय कृष्णाय श्रीमहाविष्णवे नमः॥ ७४॥
पश्यामि त्वां महसिंहं हारिणं वनमालिनम्।
किरीटिनं कुण्डलिनं सर्वाङ्गं सर्वतोमुखम्॥ ७५॥
सर्वतः पाणिपादोरः सर्वतोऽक्षिशिरोमुखम्।
सर्वेश्वरं सदातुष्टं समर्थं समरप्रियम्॥ ७६॥
बहुयोजनविस्तीर्णं बहुयोजनमायतम्।
बहुयोजनहस्तांघ्रिं बहुयोजननासिकम्॥ ७७॥
महारूपं महावक्त्रं महादंष्ट्रं महाभुजम्।
महानादं महारौद्रं महाकायं महाबलम्॥ ७८॥
आनाभेर्ब्रह्मणो रूपमागलाद्वैष्णवं तथा।
आशीर्षाद्रुद्रमीशानं तदग्रे सर्वतः शिवम्॥ ७९॥
नमोऽस्तु नारायणनारसिंह
नमोऽस्तु नारायणवीरसिंह।
नमोऽस्तु नारायणक्रूरसिंह
नमोऽस्तु नारायणदिव्यसिंह॥ ८०॥
नमोऽस्तु नारायणव्याघ्रसिंह
नमोऽस्तु नारायणपुच्छसिंह।

नमोऽस्तु नारायणपूर्णसिंह
नमोऽस्तु नारायणरौद्रसिंह ॥ ८१ ॥
नमो नमो भीषणभद्रसिंह
नमो नमो विह्वलनेत्रसिंह।
नमो नमो बृंहितभूतसिंह
नमो नमो निर्मलचित्रसिंह ॥ ८२ ॥
नमो नमो निर्जितकालसिंह
नमो नमः कल्पितकल्पसिंह।
नमो नमः कामदकामसिंह
नमो नमस्ते भुवनैकसिंह ॥ ८३ ॥
द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ ८४ ॥
अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ ८५ ॥
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ ८६ ॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो॥ ८७॥

भविष्णुस्त्वं सहिष्णुस्त्वं भ्राजिष्णुर्जिष्णुरेव च।
पृथिवी अन्तरिक्षं त्वं पर्वतारण्यमेव च॥ ८८॥
कलाकाष्ठाविलिप्तस्त्वं मुहूर्तप्रहरादिकम्।
अहोरात्रं त्रिसन्ध्यं च पक्षमासर्तुवत्सराः॥ ८९॥
युगादियुगभेदस्त्वं संयुगे युगसन्धयः।
नित्यं नैमित्तिकं दैनं महाप्रलयमेव च॥ ९०॥
करणं कारणं कर्ता भर्ता हर्ता त्वमीश्वरः।
सत्कर्ता सत्कृतिर्गोप्ता सच्चिदानन्दविग्रहः॥ ९१॥
प्राणस्त्वं प्राणिनां प्रत्यगात्मा त्वं सर्वदेहिनाम्।
सुज्योतिस्त्वं परंज्योतिरात्मज्योतिः सनातनः॥ ९२॥
ज्योतिर्लोकस्वरूपस्त्वं त्वं ज्योतिर्ज्योतिषां पतिः।
स्वाहाकारः स्वधाकारो वषट्कारः कृपाकरः॥ ९३॥
हन्तकारो निराकारो वेगाकारश्च शङ्करः।
अकारादिहकारान्त ॐकारो लोककारकः॥ ९४॥
एकात्मा त्वमनेकात्मा चतुरात्मा चतुर्भुजः।
चतुर्मूर्तिश्चतुर्दंष्ट्रश्चतुर्वेदमयोत्तमः॥ ९५॥
लोकप्रियो लोकगुरुर्लोकेशो लोकनायकः।
लोकसाक्षी लोकपतिर्लोकात्मा लोकलोचनः॥ ९६॥

लोकाधारो बृहल्लोको लोकालोकमयो विभुः।
लोककर्ता विश्वकर्ता कृतावर्तः कृतागमः॥ ९७ ॥
अनादिस्त्वमनन्तस्त्वमभूतो भूतविग्रहः।
स्तुतिः स्तुत्यः स्तवप्रीतः स्तोता नेता नियामकः॥ ९८ ॥
त्वं गतिस्त्वं मतिर्मह्यं पिता माता गुरुः सखा।
सुहृदश्चात्मरूपस्त्वं त्वां विना नास्ति मे गतिः॥ ९९ ॥
नमस्ते मन्त्ररूपाय अस्त्ररूपाय ते नमः।
बहुरूपाय रूपाय पञ्चरूपधराय च॥ १०० ॥
भद्ररूपाय रूढाय योगरूपाय योगिने।
समरूपाय योगाय योगपीठस्थिताय च॥ १०१ ॥
योगगम्याय सौम्याय ध्यानगम्याय ध्यायिने।
ध्येयगम्याय धाम्ने च धामाधिपतये नमः॥ १०२ ॥
धराधराय धर्माय धारणाभिरताय च।
नमो धात्रे च सन्धात्रे विधात्रे च धराय च॥ १०३ ॥
दामोदराय दान्ताय दानवान्तकराय च।
नमः संसारवैद्याय भेषजाय नमो नमः॥ १०४ ॥
सीरध्वजाय शीताय वातायाप्रमिताय च।
सारस्वताय संसारनाशनायाक्षमालिने॥ १०५ ॥
असिधर्मधरायैव षट्कर्मनिरताय च।
विकर्माय सुकर्माय परकर्मविधायिने॥ १०६ ॥
सुशर्मणे मन्मथाय नमो वर्माय वर्मिणे।
करिचर्मवसानाय करालवदनाय च॥ १०७ ॥

कवये पद्मगर्भाय भूतगर्भघृणानिधे।
ब्रह्मगर्भाय गर्भाय बृहद्गर्भाय धूर्जटे॥ १०८॥
नमस्ते विश्वगर्भाय श्रीगर्भाय जितारये।
नमो हिरण्यगर्भाय हिरण्यकवचाय च॥ १०९॥
हिरण्यवर्णदेहाय हिरण्याक्षविनाशिने।
हिरण्यकशिपोर्हन्त्रे हिरण्यनयनाय च॥ ११०॥
हिरण्यरेतसे तुभ्यं हिरण्यवदनाय च।
नमो हिरण्यशृङ्गाय निःशृङ्गाय च शृङ्गिणे॥ १११॥
भैरवाय सुकेशाय भीषणायान्त्रमालिने।
चण्डाय रुण्डमालाय नमो दण्डधराय च॥ ११२॥
अखण्डतत्त्वरूपाय कमण्डलुधराय च।
नमस्ते खण्डसिंहाय सत्यसिंहाय ते नमः॥ ११३॥
नमस्ते श्वेतसिंहाय पीतसिंहाय ते नमः।
नीलसिंहाय नीलाय रक्तसिंहाय ते नमः॥ ११४॥
नमो हारिद्रसिंहाय धूम्रसिंहाय ते नमः।
मूलसिंहाय मूलाय बृहत्सिंहाय ते नमः॥ ११५॥
पातालस्थितसिंहाय नमः पर्वतवासिने।
नमो जलस्थसिंहाय अन्तरिक्षस्थिताय च॥ ११६॥
कालाग्निरुद्रसिंहाय चण्डसिंहाय ते नमः।
अनन्तसिंहसिंहाय अनन्तगतये नमः॥ ११७॥
नमो विचित्रसिंहाय बहुसिंहस्वरूपिणे।
अभयङ्करसिंहाय नरसिंहाय ते नमः॥ ११८॥

नमोऽस्तु सिंहराजाय नारसिंहाय ते नमः।
सप्ताब्धिमेखलायैव सत्यासत्यस्वरूपिणे॥ ११९॥
सप्तलोकान्तरस्थाय सप्तस्वरमयाय च।
सप्तार्चीरूपदंष्ट्राय सप्ताश्वरथरूपिणे॥ १२०॥
सप्तवायुस्वरूपाय सप्तच्छन्दोमयाय च।
स्वच्छाय स्वच्छरूपाय स्वच्छन्दाय च ते नमः॥ १२१॥
श्रीवत्साय सुवेधाय श्रुतये श्रुतिमूर्तये।
शुचिश्रवाय शूराय सुप्रभाय सुधन्विने॥ १२२॥
शुभ्राय सुरनाथाय सुप्रभाय शुभाय च।
सुदर्शनाय सूक्ष्माय निरुक्ताय नमो नमः॥ १२३॥
सुप्रभाय स्वभावाय भवाय विभवाय च।
सुशाखाय विशाखाय सुमुखाय मुखाय च॥ १२४॥
सुनखाय सुदंष्ट्राय सुरथाय सुधाय च।
सांख्याय सुरमुख्याय प्रख्याताय प्रभाय च॥ १२५॥
नमः खट्वाङ्गहस्ताय खेटमुद्गरपाणये।
खगेन्द्राय मृगेन्द्राय नागेन्द्राय दृढाय च॥ १२६॥
नागकेयूरहाराय नागेन्द्रायाघमर्दिने।
नदीवासाय नग्नाय नानारूपधराय च॥ १२७॥
नागेश्वराय नागाय नमिताय नराय च।
नागान्तकरथायैव नरनारायणाय च॥ १२८॥
नमो मत्स्यस्वरूपाय कच्छपाय नमो नमः।
नमो यज्ञवराहाय नरसिंहाय ते नमः॥ १२९॥

विक्रमाक्रान्तलोकाय वामनाय महौजसे।
नमो भार्गवरामाय रावणान्तकराय च॥ १३०॥
नमस्ते बलरामाय कंसप्रध्वंसकारिणे।
बुद्धाय बुद्धरूपाय तीक्ष्णरूपाय कल्किने॥ १३१॥
आत्रेयायाग्निनेत्राय कपिलाय द्विजाय च।
क्षेत्राय पशुपालाय पशुवक्त्राय ते नमः॥ १३२॥
गृहस्थाय वनस्थाय यतये ब्रह्मचारिणे।
स्वर्गापवर्गदात्रे च तद्भोक्त्रे च मुमुक्षवे॥ १३३॥
शालग्रामनिवासाय क्षीराब्धिशयनाय च।
श्रीशैलाद्रिनिवासाय शिलावासाय ते नमः॥ १३४॥
योगिहृत्पद्मवासाय महाहासाय ते नमः।
गुहावासाय गुह्याय गुप्ताय गुरवे नमः॥ १३५॥
नमो मूलाधिवासाय नीलवस्त्रधराय च।
पीतवस्त्राय शस्त्राय रक्तवस्त्रधराय च॥ १३६॥
रक्तमालाविभूषाय रक्तगन्धानुलेपिने।
धुरन्धराय धूर्ताय दुर्धराय धराय च॥ १३७॥
दुर्मदाय दुरन्ताय दुर्धराय नमो नमः।
दुर्निरीक्ष्याय निष्ठाय दुर्दर्शाय द्रुमाय च॥ १३८॥
दुर्भेदाय दुराशाय दुर्लभाय नमो नमः।
दृप्ताय दृप्तवक्त्राय अदृप्तनयनाय च॥ १३९॥
उन्मत्ताय प्रमत्ताय नमो दैत्यारये नमः।
रसज्ञाय रसेशाय अरक्तरसनाय च॥ १४०॥

पथ्याय परितोषाय रथ्याय रसिकाय च।
ऊर्ध्वकेशोर्ध्वरूपाय नमस्ते चोर्ध्वरेतसे॥ १४१॥
ऊर्ध्वसिंहाय सिंहाय नमस्ते चोर्ध्वबाहवे।
परप्रध्वंसकायैव शङ्खचक्रधराय च॥ १४२॥
गदापद्मधरायैव पञ्चबाणधराय च।
कामेश्वरायैव कामाय कामपालाय कामिने॥ १४३॥
नमः कामविहाराय कामरूपधराय च।
सोमसूर्याग्निनेत्राय सोमपाय नमो नमः॥ १४४॥
नमः सोमाय वामाय वामदेवाय ते नमः।
सामस्वनाय सौम्याय भक्तिगम्याय वै नमः॥ १४५॥
कूष्माण्डगणनाथाय सर्वश्रेयस्कराय च।
भीष्माय भीप्रदायैव भीमविक्रमणाय च॥ १४६॥
मृगग्रीवाय जीवाय जितायाजितकारिणे।
जटिने जामदग्न्याय नमस्ते जातवेदसे॥ १४७॥
जपाकुसुमवर्णाय जप्याय जपिताय च।
जरायुजायाण्डजाय स्वेदजायोद्भिजाय च॥ १४८॥
जनार्दनाय रामाय जाह्नवीजनकाय च।
जराजन्मादिदूराय प्रद्युम्नाय प्रमोदिने॥ १४९॥
जिह्वारौद्राय रुद्राय वीरभद्राय ते नमः।
चिद्रूपाय समुद्राय कद्रुद्राय प्रचेतसे॥ १५०॥
इन्द्रियायेन्द्रियज्ञाय नमोऽस्त्विन्द्रानुजाय च।
अतीन्द्रियाय साराय इन्दिरापतये नमः॥ १५१॥

ईशानाय च ईड्याय ईशिताय इनाय च।
व्योमात्मने च व्योम्ने च नमस्ते व्योमकेशिने॥ १५२॥
व्योमाधाराय च व्योमवक्त्रायासुरघातिने।
नमस्ते व्योमदंष्ट्राय व्योमवासाय ते नमः॥ १५३॥
सुकुमाराय रामाय शुभाचाराय वै नमः।
विश्वाय विश्वरूपाय नमो विश्वात्मकाय च॥ १५४॥
ज्ञानात्मकाय ज्ञानाय विश्वेशाय परात्मने।
एकात्मने नमस्तुभ्यं नमस्ते द्वादशात्मने॥ १५५॥
चतुर्विंशतिरूपाय पञ्चविंशतिमूर्तये।
षड्विंशकात्मने नित्यं सप्तविंशतिकात्मने॥ १५६॥
धर्मार्थकाममोक्षाय विरक्ताय नमो नमः।
भावशुद्धाय सिद्धाय साध्याय शरभाय च॥ १५७॥
प्रबोधाय सुबोधाय नमो बुद्धिप्रियाय च।
स्निग्धाय च विदग्धाय मुग्धाय मुनये नमः॥ १५८॥
प्रियंवदाय श्रव्याय स्रुक्स्रुवाय श्रिताय च।
गृहेशाय महेशाय ब्रह्मेशाय नमो नमः॥ १५९॥
श्रीधराय सुतीर्थाय हयग्रीवाय ते नमः।
उग्राय उग्रवेगाय उग्रकर्मरताय च॥ १६०॥
उग्रनेत्राय व्यग्राय समग्रगुणशालिने।
बालग्रहविनाशाय पिशाचग्रहघातिने॥ १६१॥
दुष्टग्रहनिहन्त्रे च निग्रहानुग्रहाय च।
वृषध्वजाय वृष्णाय वृषाय वृषभाय च॥ १६२॥

उग्रश्रवाय शान्ताय नमः श्रुतिधराय च।
नमस्ते देवदेवेश नमस्ते मधुसूदन॥ १६३॥
नमस्ते पुण्डरीकाक्ष नमस्ते दुरितक्षय।
नमस्ते करुणासिन्धो नमस्ते समितिञ्जय॥ १६४॥
नमस्ते नरसिंहाय नमस्ते गरुडध्वज।
यज्ञनेत्र नमस्तेऽस्तु कालध्वज जयध्वज॥ १६५॥
अग्निनेत्र नमस्तेऽस्तु नमस्ते ह्यमरप्रिय।
महानेत्र नमस्तेऽस्तु नमस्ते भक्तवत्सल॥ १६६॥
धर्मनेत्र नमस्तेऽस्तु नमस्ते करुणाकर।
पुण्यनेत्र नमस्तेऽस्तु नमस्तेऽभीष्टदायक॥ १६७॥
नमो नमस्ते जयसिंहरूप
नमो नमस्ते नरसिंहरूप।
नमो नमस्ते रणसिंहरूप
नमो नमस्ते नरसिंहरूप॥ १६८॥
उद्धृत्य गर्वितं दैत्यं निहत्याजौ सुरद्विषम्।
देवकार्यं महत्कृत्वा गर्जसे स्वात्मतेजसा॥ १६९॥
अतिरुद्रमिदं रूपं दुस्सहं दुरतिक्रमम्।
दृष्ट्वा तु शङ्किताः सर्वा देवतास्त्वामुपागताः॥ १७०॥
एतान् पश्य महेशानं ब्रह्माणं मां शचीपतिम्।
दिक्पालान् द्वादशादित्यान् रुद्रानुरगराक्षसान्॥ १७१॥
सर्वान् ऋषिगणान् सप्तमातृगौरीं सरस्वतीम्।
लक्ष्मीं नदीश्च तीर्थानि रतिं भूतगणान्यपि॥ १७२॥

प्रसीद त्वं महासिंह उग्रभावमिमं त्यज।
प्रकृतिस्थो भव त्वं हि शान्तिभावं च धारय॥ १७३॥
इत्युक्त्वा दण्डवद्भूमौ पपात स पितामहः।
प्रसीद त्वं प्रसीद त्वं प्रसीदेति पुनः पुनः॥ १७४॥

*मार्कण्डेय उवाच*

दृष्ट्वा तु देवताः सर्वाः श्रुत्वा तां ब्रह्मणो गिरम्।
स्तोत्रेणापि च संहृष्टः सौम्यभावमधारयत्॥ १७५॥
अब्रवीन्नारसिंहस्तु वीक्ष्य सर्वान् सुरोत्तमान्।
संत्रस्तान् भयसंविग्नान् शरणं समुपागतान्॥ १७६॥

*श्रीनृसिंह उवाच*

भो भो देववराः सर्वे पितामहपुरोगमाः।
शृणुध्वं मम वाक्यं च भवन्तु विगतज्वराः॥ १७७॥
यद्धितं भवतां नूनं तत्करिष्यामि साम्प्रतम्।

॥ फलश्रुतिः ॥

एवं नामसहस्रं मे त्रिसन्ध्यं यः पठेच्छुचिः॥ १७८॥
शृणोति वा श्रावयति पूजान्ते भक्तिसंयुतः।
सर्वान् कामानवाप्नोति जीवेच्च शरदां शतम्॥ १७९॥
यो नामभिर्नृसिंहाद्यैरर्चयेत् क्रमशो मम।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्॥ १८०॥
सर्वपूजासु यत्प्रोक्तं तत्सर्वं लभते भृशम्।
जातिस्मरत्वं लभते ब्रह्मज्ञानं सनातनम्॥ १८१॥
सर्वपापविनिर्मुक्तस्तद्विष्णोः परमं पदम्।
मन्नामकवचं बध्वा विचरेद्विगतज्वरः॥ १८२॥

भूतवेतालकूष्माण्डपिशाचब्रह्मराक्षसाः ।
शाकिनीडाकिनीज्येष्ठा नीली बालग्रहादिकाः ॥ १८३ ॥
दुष्टग्रहाश्च नश्यन्ति यक्षराक्षसपन्नगाः ।
ये च सन्ध्याग्रहाः सर्वे चाण्डालग्रहसंज्ञिकाः ॥ १८४ ॥
निशाचरग्रहाः सर्वे प्रणश्यन्ति च दूरतः ।
कुक्षिरोगं च हृद्रोगं शूलापस्मारमेव च ॥ १८५ ॥
एकाहिकं द्व्याहिकं च चातुर्थिकमथ ज्वरम् ।
आधयो व्याधयः सर्वे रोगा रोगाधिदेवताः ॥ १८६ ॥
शीघ्रं नश्यन्ति ते सर्वे नृसिंहस्मरणात् सुराः ।
राजानो दासतां यान्ति शत्रवो यान्ति मित्रताम् ॥ १८७ ॥
जलानि स्थलतां यान्ति वह्नयो यान्ति शीतताम् ।
विषा अप्यमृता यान्ति नृसिंहस्मरणात् सुराः ॥ १८८ ॥
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ।
विद्याकामो लभेद्विद्यां बद्धो मुच्येत बन्धनात् ॥ १८९ ॥
व्यालव्याघ्रभयं नास्ति चोरसर्पादिकं तथा ।
अनुकूला भवेद्भार्या लोकैश्च प्रतिपूज्यते ॥ १९० ॥
सुपुत्रं धनधान्यं च भवन्ति विगतज्वराः ।
एतत्सर्वं समाप्नोति नृसिंहस्य प्रसादतः ॥ १९१ ॥
जलसंतरणे चैव पर्वतारण्यमेव च ।
वने विचरन् मर्त्यो दुर्गमे विषमे पथि ॥ १९२ ॥
कलिप्रवेशने चापि नारसिंहं न विस्मरेत् ।
ब्रह्मघ्नश्च पशुघ्नश्च भ्रूणहा गुरुतल्पगः ॥ १९३ ॥

मुच्यते सर्वपापेभ्यः कृतघ्नः स्त्रीविघातकः।
वेदानां दूषकश्चापि मातापितृविनिन्दकः॥ १९४॥
असत्यस्तु तथा यज्ञनिन्दको लोकनिन्दकः।
स्मृत्वा सकृन्नृसिंहं तु मुच्यते सर्वकिल्बिषैः॥ १९५॥
बहुनात्र किमुक्तेन स्मृत्वा मां शुद्धमानसः।
यत्र यत्र चरेन्मर्त्यो नृसिंहस्तत्र रक्षति॥ १९६॥
गच्छन् तिष्ठन् स्वपन् भुञ्जन् जाग्रन्नपि हसन्नपि।
नृसिंहेति नृसिंहेति नृसिंहेति सदा स्मरन्॥ १९७॥
पुमान् न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति।
नारी सुभगतामेति सौभाग्यं च स्वरूपताम्॥ १९८॥
भर्तुः प्रियत्वं लभते न वैधव्यं च विन्दति।
न सपत्नीं च जन्मान्ते सम्यग् ज्ञानी भवेद् द्विजः॥ १९९॥
भूमिप्रदक्षिणान्मर्त्यो यत्फलं लभते चिरात्।
तत्फलं लभते नारसिंहमूर्तिप्रदक्षिणात्॥ २००॥

मार्कण्डेय उवाच

इत्युक्त्वा देवदेवेशो लक्ष्मीमालिङ्ग्य लीलया।
प्रह्लादस्याभिषेकं तु ब्रह्मणे चोपदिष्टवान्॥ २०१॥
श्रीशैलस्य प्रभासे तु लोकानां च हिताय वै।
स्वरूपं स्थापयामास प्रकृतिस्थोऽभवत् तदा॥ २०२॥
ब्रह्मापि दैत्यराजानं प्रह्लादमभ्यषेचयत्।
दैवतैः सह सुप्रीतो ह्यात्मलोकं ययौ स्वयम्॥ २०३॥
हिरण्यकशिपोर्भीत्या प्रललाप शचीपतिः।
स्वर्गराज्यपरिभ्रष्टो युगानामेकविंशतिः॥ २०४॥

८५५ ॐ अहंकृत्यै नमः।
८५६ ॐ अहङ्कारायै नमः।
८५७ ॐ बालायै नमः।
८५८ ॐ मायायै नमः।
८५९ ॐ बलिप्रियायै नमः।
८६० ॐ स्रुचे नमः।
८६१ ॐ स्रुवायै नमः।
८६२ ॐ सामिधेन्यै नमः।
८६३ ॐ सुश्रद्धायै नमः।
८६४ ॐ श्राद्धदेवतायै नमः।
८६५ ॐ मात्रे नमः।
८६६ ॐ मातामह्यै नमः।
८६७ ॐ तृप्त्यै नमः।
८६८ ॐ पितृमात्रे नमः।
८६९ ॐ पितामह्यै नमः।
८७० ॐ स्नुषायै नमः।
८७१ ॐ दौहित्रिण्यै नमः।
८७२ ॐ पुत्र्यै नमः।
८७३ ॐ पौत्र्यै नमः।
८७४ ॐ नप्त्र्यै नमः।
८७५ ॐ शिशुप्रियायै नमः।
८७६ ॐ स्तनदायै नमः।
८७७ ॐ स्तनधारायै नमः।
८७८ ॐ विश्वयोन्यै नमः।
८७९ ॐ स्तनन्धय्यै नमः।
८८० ॐ शिशूत्सङ्गधरायै नमः।
८८१ ॐ दोलालोलाक्रीडाभिनन्दिन्यै नमः।
८८२ ॐ उर्वश्यै नमः।
८८३ ॐ कदल्यै नमः।
८८४ ॐ केकायै नमः।
८८५ ॐ विशिखायै नमः।
८८६ ॐ शिखिवर्तिन्यै नमः।
८८७ ॐ खट्वाङ्गधारिण्यै नमः।
८८८ ॐ खट्वबाणपुंखानुवर्तिन्यै नमः।
८८९ ॐ लक्ष्यप्राप्तिकरायै नमः।
८९० ॐ लक्ष्यालक्ष्यायै नमः।
८९१ ॐ शुभलक्षणायै नमः।
८९२ ॐ वर्तिन्यै नमः।
८९३ ॐ सुपथाचारायै नमः।
८९४ ॐ परिखायै नमः।
८९५ ॐ खन्यै नमः।
८९६ ॐ वृत्यै नमः।
८९७ ॐ प्राकारवलयायै नमः।
८९८ ॐ वेलायै नमः।
८९९ ॐ मर्यादायै नमः।
९०० ॐ महोदधये नमः।
९०१ ॐ पोषिण्यै नमः।
९०२ ॐ शोषिण्यै नमः।
९०३ ॐ शक्त्यै नमः।
९०४ ॐ दीर्घकेश्यै नमः।
९०५ ॐ सुलोमशायै नमः।
९०६ ॐ ललितायै नमः।
९०७ ॐ मांसलायै नमः।
९०८ ॐ तन्व्यै नमः।
९०९ ॐ वेदवेदाङ्गधारिण्यै नमः।

११० ॐ नरासृक्पानमत्तायै नमः।
१११ ॐ नरमुण्डास्थिभूषणायै नमः।
११२ ॐ अक्षक्रीडायै नमः।
११३ ॐ रत्यै नमः।
११४ ॐ शार्यै नमः।
११५ ॐ सारिकायै नमः।
११६ ॐ शुकभाषिण्यै नमः।
११७ ॐ शाम्बर्यै नमः।
११८ ॐ गारुड्यै नमः।
११९ ॐ विद्यायै नमः।
१२० ॐ वारुण्यै नमः।
१२१ ॐ वरुणार्चितायै नमः।
१२२ ॐ वाराह्यै नमः।
१२३ ॐ तुण्डहस्तायै नमः।
१२४ ॐ दंष्ट्रोद्धृतवसुन्धरायै नमः।
१२५ ॐ मीनमूर्त्यै नमः।
१२६ ॐ धरामूर्त्यै नमः।
१२७ ॐ वदान्यायै नमः।
१२८ ॐ अप्रतिमाश्रयायै नमः।
१२९ ॐ अमूर्तायै नमः।
१३० ॐ निधिरूपायै नमः।
१३१ ॐ शालग्रामशिलाशुचये नमः।
१३२ ॐ स्मृतिसंस्काररूपायै नमः।
१३३ ॐ सुसंस्कारायै नमः।
१३४ ॐ संस्कृत्यै नमः।
१३५ ॐ प्राकृतायै नमः।
१३६ ॐ देशभाषायै नमः।
१३७ ॐ गाथायै नमः।
१३८ ॐ गीत्यै नमः।
१३९ ॐ प्रहेलिकायै नमः।
१४० ॐ इडायै नमः।
१४१ ॐ पिङ्गलायै नमः।
१४२ ॐ पिङ्गायै नमः।
१४३ ॐ सुषुम्नायै नमः।
१४४ ॐ सूर्यवाहिन्यै नमः।
१४५ ॐ शशिस्त्रवायै नमः।
१४६ ॐ तालस्थायै नमः।
१४७ ॐ काकिन्यमृतजीविन्यै नमः।
१४८ ॐ अणुरूपायै नमः।
१४९ ॐ बृहद्रूपायै नमः।
१५० ॐ लघुरूपायै नमः।
१५१ ॐ गुरुस्थिरायै नमः।
१५२ ॐ स्थावरायै नमः।
१५३ ॐ जङ्गमायै नमः।
१५४ ॐ देव्यै नमः।
१५५ ॐ कृतकर्मफलप्रदायै नमः।
१५६ ॐ विषयाक्रान्तदेहायै नमः।
१५७ ॐ निर्विशेषायै नमः।
१५८ ॐ जितेन्द्रियायै नमः।
१५९ ॐ विश्वरूपायै नमः।
१६० ॐ चिदानन्दायै नमः।
१६१ ॐ परब्रह्मप्रबोधिन्यै नमः।
१६२ ॐ निर्विकारायै नमः।
१६३ ॐ निर्वैरायै नमः।
१६४ ॐ विरत्यै नमः।
१६५ ॐ सत्यवर्धिन्यै नमः।
१६६ ॐ पुरुषाज्ञायै नमः।
१६७ ॐ भिन्नायै नमः।

९६८ ॐ क्षान्त्यै नमः।
९६९ ॐ कैवल्यदायिन्यै नमः।
९७० ॐ विविक्तसेविन्यै नमः।
९७१ ॐ प्रज्ञायै नमः।
९७२ ॐ जनयित्र्यै नमः।
९७३ ॐ बहुश्रुत्यै नमः।
९७४ ॐ निरीहायै नमः।
९७५ ॐ समस्तैकायै नमः।
९७६ ॐ सर्वलोकैकसेवितायै नमः।
९७७ ॐ सेवासेवायै नमः।
९७८ ॐ प्रियासेव्यायै नमः।
९७९ ॐ सेवाफलविवर्धिन्यै नमः।
९८० ॐ कलौ कल्किप्रियायै नमः।
९८१ ॐ काल्यै नमः।
९८२ ॐ दुष्टम्लेच्छविनाशिन्यै नमः।
९८३ ॐ प्रत्यक्षायै नमः।
९८४ ॐ धनुर्यष्ट्यै नमः।
९८५ ॐ खड्गधारायै नमः।
९८६ ॐ दुरानत्यै नमः।
९८७ ॐ अश्वप्लुत्यै नमः।
९८८ ॐ वल्गायै नमः।
९८९ ॐ सृण्यै नमः।
९९० ॐ सन्मृत्युवारिण्यै नमः।
९९१ ॐ वीरभुवे नमः।
९९२ ॐ वीरमात्रे नमः।
९९३ ॐ वीरसुवे नमः।
९९४ ॐ वीरनन्दिन्यै नमः।
९९५ ॐ जयश्रियै नमः।
९९६ ॐ जयदीक्षायै नमः।
९९७ ॐ जयदायै नमः।
९९८ ॐ जयवर्धिन्यै नमः।
९९९ ॐ सौभाग्यसुभगाकारायै नमः।
१००० ॐ सर्वसौभाग्यवर्धिन्यै नमः।
१००१ ॐ क्षेमङ्कर्यै नमः।
१००२ ॐ सिद्धिरूपायै नमः।
१००३ ॐ सत्कीर्त्यै नमः।
१००४ ॐ पथि देवतायै नमः।
१००५ ॐ सर्वतीर्थमयीमूर्त्यै नमः।
१००६ ॐ सर्वदेवमयीप्रभायै नमः।
१००७ ॐ सर्वसिद्धिप्रदायै नमः।
१००८ ॐ शक्त्यै नमः।
१००९ ॐ सर्वमङ्गलमङ्गलायै नमः।

॥ इति श्रीरुद्रयामलतन्त्रान्तर्गता श्रीभवानीसहस्रनामावलिः सम्पूर्णा ॥

॥ श्रीदत्तात्रेयाय नमः ॥

# श्रीदत्तात्रेयसहस्रनामस्तोत्रम्

*मुनय ऊचुः*

निखिलागमतत्त्वज्ञ ब्रह्मध्यानपरायण।
वदास्माकं मुक्त्युपायं सूत सर्वोपकारकम्॥ १॥
सर्वदेवेषु को देवः सद्यो मोक्षप्रदो भवेत्।
को मनुर्वा भवेत् तस्य सद्यः प्रीतिकरो ध्रुवम्॥ २॥

*सूत उवाच*

निगमागमतत्त्वज्ञो ह्यवधूतश्चिदम्बरः।
भक्तवात्सल्यप्रवणो दत्त एव हि केवलः॥ ३॥
सदा प्रसन्नवदनो भक्तचिन्तैकतत्परः।
तस्य नामान्यनन्तानि वर्तन्तेऽथाप्यदः परम्॥ ४॥
दत्तस्य नामसाहस्त्रं तस्य प्रीतिविवर्धनम्।
यस्त्विदं पठते नित्यं दत्तात्रेयैकमानसः॥ ५॥
मुच्यते सर्वपापेभ्यः स सद्यो नात्र संशयः।
अन्ते तद्धाम संयाति पुनरावृत्तिदुर्लभम्॥ ६॥

---

अस्य श्रीमद्दत्तात्रेयसहस्रनामस्तोत्रमन्त्रस्य अवधूत ऋषिः, अनुष्टुप् छन्दः, दिगम्बरो देवता, ॐ बीजम्, ह्रीं शक्तिः, क्रौं कीलकम्, श्रीदत्तात्रेयप्रीत्यर्थे जपे विनियोगः।

ध्यानम्

दिगम्बरं भस्मविलेपिताङ्गं
बोधात्मकं मुक्तिकरं प्रसन्नम्।
निर्मानसं श्यामतनुं भजेऽहं
दत्तात्रेयं ब्रह्मसमाधियुक्तम्॥*

स्तोत्रम्

दत्तात्रेयो महायोगी योगेशश्चामरप्रभुः।
मुनिर्दिगम्बरो बालो मायामुक्तो मदापहः॥ १॥
अवधूतो महानाथः शंकरोऽमरवल्लभः।
महादेवश्चादिदेवः पुराणप्रभुरीश्वरः॥ २॥
सत्त्वकृत् सत्त्वभृद्भावो सत्त्वात्मा सत्त्वसागरः।
सत्त्ववित् सत्त्वसाक्षी च सत्त्वसाध्योऽमराधिपः॥ ३॥
भूतकृद्भूतभृच्चैव भूतात्मा भूतसम्भवः।
भूतभावो भवो भूतवित् तथा भूतकारणः॥ ४॥
भूतसाक्षी प्रभूतिश्च भूतानां परमा गतिः।
भूतसंगविहीनात्मा भूतात्मा भूतशंकरः॥ ५॥
भूतनाथो महानाथ आदिनाथो महेश्वरः।
सर्वभूतनिवासात्मा भूतसंतापनाशनः॥ ६॥
सर्वात्मा सर्वभृत् सर्वः सर्वज्ञः सर्वनिर्णयः।
सर्वसाक्षी बृहद्भानुः सर्ववित् सर्वमङ्गलः॥ ७॥

---

* जो दिगम्बर वेषमें रहनेवाले हैं, अपने समस्त अङ्गोंमें भस्म लगाये हुए हैं, ज्ञानस्वरूप हैं, मुक्ति प्रदान करनेवाले हैं, प्रसन्न रहनेवाले हैं तथा जिनका शरीर कृष्णवर्णका है और जिनका मन वृत्तियोंसे रहित है ऐसे ब्रह्मसमाधिमें प्रतिष्ठित रहनेवाले भगवान् दत्तात्रेयका मैं ध्यान करता हूँ।

शान्तः सत्यः समः पूर्ण एकाकी कमलापतिः।
रामो रामप्रियश्चैव विरामो रामकारणः॥ ८॥
शुद्धात्मा पावनोऽनन्तः प्रतीतः परमार्थभृत्।
हंससाक्षी विभुश्चैव प्रभुः प्रलय इत्यपि॥ ९॥
सिद्धात्मा परमात्मा च सिद्धानां परमा गतिः।
सिद्धिसिद्धस्तथा साध्यः साधनो ह्युत्तमस्तथा॥ १०॥
सुलक्षणः सुमेधावी विद्यावान् विगतान्तरः।
विज्वरश्च महाबाहुर्बहुलानन्दवर्धनः॥ ११॥
अव्यक्तपुरुषः प्राज्ञः परज्ञः परमार्थदृक्।
परापरविनिर्मुक्तो युक्तस्तत्त्वप्रकाशवान्॥ १२॥
दयावान् भगवान् भावी भावात्मा भावकारणः।
भवसंतापनाशश्च पुष्पवान् पण्डितो बुधः॥ १३॥
प्रत्यक्षवस्तुर्विश्वात्मा प्रत्यग्ब्रह्मसनातनः।
प्रमाणविगतश्चैव प्रत्याहारनियोजकः॥ १४॥
प्रणवः प्रणवातीतः प्रमुखः प्रलयात्मकः।
मृत्युंजयो विविक्तात्मा शंकरात्मा परो वपुः॥ १५॥
परमस्तनुविज्ञेयः परमात्मनि संस्थितः।
प्रबोधकलनाधारः प्रभावप्रवरोत्तमः॥ १६॥
चिदम्बरश्चिद्विलासश्चिदाकाशश्चिदुत्तमः।
चित्तचैतन्यचित्तात्मा देवानां परमा गतिः॥ १७॥
अचेत्यश्चेतनाधारश्चेतनाचित्तविक्रमः।
चित्तात्मा चेतनारूपो लसत्पङ्कजलोचनः॥ १८॥

परंब्रह्म परंज्योतिः परंधाम परंतपः।
परंसूत्रः परतन्त्रः पवित्रः परस्मोहवान् ॥ १९ ॥
क्षेत्रज्ञः क्षेत्रगः क्षेत्रः क्षेत्राधारः पुरञ्जनः।
क्षेत्रशून्यो लोकसाक्षी क्षेत्रवान् बहुनायकः ॥ २० ॥
योगेन्द्रो योगपूज्यश्च योग्य आत्मविदां शुचिः।
योगमायाधरः स्थाणुरचलः कमलापतिः ॥ २१ ॥
योगेशो योगनिर्माता योगज्ञानप्रकाशनः।
योगपालो लोकपालः संसारतमनाशनः ॥ २२ ॥
गुह्यो गुह्यतमो गुप्तो मुक्तो युक्तः सनातनः।
गहनो गगनाकारो गम्भीरो गणनायकः ॥ २३ ॥
गोविन्दो गोपतिर्गोप्ता गोभागो भावसंस्थितः।
गोसाक्षी गोतमारिश्च गान्धारो गगनाकृतिः ॥ २४ ॥
योगयुक्तो भोगयुक्तः शंकामुक्त समाधिमान्।
सहजः सकलेशानः कार्तवीर्यवरप्रदः ॥ २५ ॥
सरजो विरजाः पुमान् पावनः पापनाशनः।
परावरविनिर्मुक्तः परंज्योतिः पुरातनः ॥ २६ ॥
नानाज्योतिरनेकात्मा स्वयंज्योतिः सदाशिवः।
दिव्यज्योतिर्मयश्चैव सत्यविज्ञानभास्करः ॥ २७ ॥
नित्यशुद्धः परः पूर्णः प्रकाशः प्रकटोद्भवः।
प्रमादविगतश्चैव परेशः परविक्रमः ॥ २८ ॥
योगी योगो योगपश्च योगाभ्यासप्रकाशनः।
योक्ता मोक्ता विधाता च त्राता पाता निरायुधः ॥ २९ ॥

नित्यमुक्तो नित्ययुक्तः सत्यः सत्यपराक्रमः।
सत्त्वशुद्धिकरः सत्त्वस्तथा सत्त्वभृतां गतिः॥ ३०॥
श्रीधरः श्रीवपुः श्रीमान् श्रीनिवासोऽमरार्चितः।
श्रीनिधिः श्रीपतिः श्रेष्ठः श्रेयस्कश्चरमाश्रयः॥ ३१॥
त्यागी त्यागार्थसम्पन्नस्त्यागात्मा त्यागविग्रहः।
त्यागलक्षणसिद्धात्मा त्यागज्ञस्त्यागकारणः॥ ३२॥
भोगो भोक्ता तथा भोग्यो भोगसाधनकारणः।
भोगी भोगार्थसम्पन्नो भोगज्ञानप्रकाशनः॥ ३३॥
केवलः केशवः कृष्णः कंवासाः कमलालयः।
कमलासनपूज्यश्च हरिरज्ञानखण्डनः॥ ३४॥
महात्मा महदादिश्च महेशोत्तमवन्दितः।
मनोबुद्धिविहीनात्मा मानात्मा मानवाधिपः॥ ३५॥
भुवनेशो विभूतिश्च धृतिर्मेधा स्मृतिर्दया।
दुःखदावानलो बुद्धः प्रबुद्धः परमेश्वरः॥ ३६॥
कामहा क्रोधहा चैव दम्भदर्पमदापहः।
अज्ञानतिमिरारिश्च भवारिर्भुवनेश्वरः॥ ३७॥
रूपकृद्रूपभृद्रूपी रूपात्मा रूपकारणः।
रूपज्ञो रूपसाक्षी च नामरूपो गुणान्तकः॥ ३८॥
अप्रमेयः प्रमेयश्च प्रमाणः प्रणवाश्रयः।
प्रमाणरहितोऽचिन्त्यश्चेतनाविगतोऽजरः॥ ३९॥
अक्षरोऽक्षरमुक्तश्च विज्वरो ज्वरनाशनः।
विशिष्टो वित्तशास्त्री च दृष्टो दृष्टान्तवर्जितः॥ ४०॥

गुणेशो गुणकायश्च गुणात्मा गुणभावनः।
अनन्तगुणसम्पन्नो गुणगर्भो गुणाधिपः॥ ४१॥
गणेशो गुणनाथश्च गुणात्मा गणभावनः।
गणबन्धुर्विवेकात्मा गुणयुक्तः पराक्रमी॥ ४२॥
अतर्क्यः क्रतुरग्निश्च कृतज्ञः सफलाश्रयः।
यज्ञश्च यज्ञफलदो यज्ञ इज्योऽमरोत्तमः॥ ४३॥
हिरण्यगर्भः श्रीगर्भः खगर्भः कुणपेश्वरः।
मायागर्भो लोकगर्भः स्वयम्भूर्भुवनान्तकः॥ ४४॥
निष्पापो निबिडो नन्दी बोधी बोधसमाश्रयः।
बोधात्मा बोधनात्मा च भेदवैतण्डखण्डनः॥ ४५॥
स्वाभाव्यो भावनिर्मुक्तो व्यक्तोऽव्यक्तसमाश्रयः।
नित्यतृप्तो निराभासो निर्वाणः शरणः सुहृत्॥ ४६॥
गुह्येशो गुणगम्भीरो गुणदोषनिवारणः।
गुणसंगविहीनश्च योगारेर्दर्पनाशनः॥ ४७॥
आनन्दः परमानन्दः स्वानन्दसुखवर्धनः।
सत्यानन्दश्चिदानन्दः सर्वानन्दपरायणः॥ ४८॥
सद्रूपः सहजः सत्यः स्वानन्दः सुमनोहरः।
सर्वः सर्वान्तरश्चैव पूर्वापूर्वतरस्तथा॥ ४९॥
खमयः खपरः खादिः खंब्रह्मा खतनुः खगः।
खवासाः खविहीनश्च खनिधिः खपराश्रयः॥ ५०॥
अनन्त आदिरूपश्च सूर्यमण्डलमध्यगः।
अमोघः परमामोघः परोक्षः परदः कविः॥ ५१॥

377

विश्वचक्षुर्विश्वसाक्षी विश्वबाहुर्धनेश्वरः।
धनंजयो महातेजास्तेजिष्ठस्तैजसः सुखी॥ ५२॥
ज्योतिर्ज्योतिर्मयो जेता ज्योतिषां ज्योतिरात्मकः।
ज्योतिषामपि ज्योतिश्च जनको जनमोहनः॥ ५३॥
जितेन्द्रियो जितक्रोधो जितात्मा जितमानसः।
जितसंगो जितप्राणो जितसंसारवासनः॥ ५४॥
निर्वासनो निरालम्बो निर्योगक्षेमवर्जितः।
निरीहो निरहंकारो निराशीर्निरुपाधिकः॥ ५५॥
नित्यबोधो विविक्तात्मा विशुद्धोत्तमगौरवः।
विद्यार्थी परमार्थी च श्रद्धार्थी साधनात्मकः॥ ५६॥
प्रत्याहारी निराहारी सर्वाहारपरायणः।
नित्यशुद्धो निराकांक्षी पारायणपरायणः॥ ५७॥
अणोरणुतरः सूक्ष्मः स्थूलः स्थूलतरस्तथा।
एकस्तथाऽनेकरूपो विश्वरूपः सनातनः॥ ५८॥
नैकरूपो विरूपात्मा नैकबोधमयस्तथा।
नैकनाममयश्चैव नैकविद्याविवर्धनः॥ ५९॥
एक एकान्तिकश्चैव नानाभावविवर्जितः।
एकाक्षरस्तथा बीजः पूर्णबिम्बः सनातनः॥ ६०॥
मन्त्रवीर्यो मन्त्रबीजः शास्त्रवीर्यो जगत्पतिः।
नानावीर्यधरश्चैव शक्रेशः पृथिवीपतिः॥ ६१॥
प्राणेशः प्राणदः प्राणः प्राणायामपरायणः।
प्राणपञ्चकनिर्मुक्तः कोशपञ्चकवर्जितः॥ ६२॥

निश्चलो निष्कलोऽसंगो निष्प्रपञ्चो निरामयः।
निराधारो निराकारो निर्विकारो निरञ्जनः॥ ६३॥
निष्प्रतीतो निराभासो निरासक्तो निराकुलः।
निष्ठासर्वगतश्चैव निरारम्भो निराश्रयः॥ ६४॥
निरन्तरः सर्वगोप्ता शान्तो दान्तो महामुनिः।
निःशब्दः सुकृतः स्वस्थः सत्यवादी सुरेश्वरः॥ ६५॥
ज्ञानदो ज्ञानविज्ञानी ज्ञानात्माऽऽनन्दपूरितः।
ज्ञानयज्ञविदां दक्षो ज्ञानाग्निर्ज्वलनो बुधः॥ ६६॥
दयावान् भवरोगारिश्चिकित्साचरमागतिः।
चन्द्रमण्डलमध्यस्थश्चन्द्रकोटिसुशीतलः॥ ६७॥
यन्त्रकृत् परमो यन्त्री यन्त्रारूढपराजितः।
यन्त्रविद्यन्त्रवासाश्च यन्त्राधारो धराधरः॥ ६८॥
तत्त्वज्ञस्तत्त्वभूतात्मा महत्तत्त्वप्रकाशनः।
तत्त्वसंख्यानयोगज्ञः सांख्यशास्त्रप्रवर्तकः॥ ६९॥
अनन्तविक्रमो देवो माधवश्च धनेश्वरः।
साधुः साधुवरिष्ठात्मा सावधानोऽमरोत्तमः॥ ७०॥
निःसंकल्पश्च निराधारो दुर्धरो ह्यात्मवित् पतिः।
आरोग्यसुखदश्चैव प्रवरो वासवस्तथा॥ ७१॥
परेशः परमोदारः प्रत्यक्चैतन्यदुर्गमः।
दुराधर्षो दुरावासो दूरत्वपरिनाशनः॥ ७२॥
वेदविद्वेदकृद्वेदो वेदात्मा विमलाशयः।
विविक्तसेवी संसारश्रमनाशनकस्तथा॥ ७३॥

ब्रह्मयोनिर्बृहद्योनिर्विश्वयोनिर्विदेहवान् ।
विशालाक्षो विश्वनाथो हाटकाङ्गदभूषणः ॥ ७४ ॥
अबाध्यो जगदाराध्यो जगदार्जवपालनः ।
जनवान् धनवान् धर्मी धर्मगो धर्मवर्धनः ॥ ७५ ॥
अमृतः शाश्वतः साध्यः सिद्धिदः सुमनोहरः ।
खलुब्रह्मखलुस्थानो मुनीनां परमा गतिः ॥ ७६ ॥
उपद्रष्टा तथा श्रेष्ठः शुचिर्भूतो ह्यनामयः ।
वेदसिद्धान्तवेद्यश्च मानसाह्लादवर्धनः ॥ ७७ ॥
देहादन्यो गुणादन्यो लोकादन्यो विवेकवित् ।
दुष्टस्वप्नहरश्चैव गुरुर्गुरुवरोत्तमः ॥ ७८ ॥
कर्मी कर्मविनिर्मुक्तः संन्यासी साधकेश्वरः ।
सर्वभावविहीनश्च तृष्णासंगनिवारकः ॥ ७९ ॥
त्यागी त्यागवपुस्त्यागस्त्यागदानविवर्जितः ।
त्यागकारणत्यागात्मा सद्गुरुः सुखदायकः ॥ ८० ॥
दक्षो दक्षादिवन्द्यश्च ज्ञानवादप्रवर्तकः ।
शब्दब्रह्ममयात्मा च शब्दब्रह्मप्रकाशवान् ॥ ८१ ॥
ग्रसिष्णुः प्रभविष्णुश्च सहिष्णुर्विगतान्तरः ।
विद्वत्तमो महावन्द्यो विशालोत्तमवाङ्मुनिः ॥ ८२ ॥
ब्रह्मविद् ब्रह्मभावश्च ब्रह्मर्षिर्ब्राह्मणप्रियः ।
ब्रह्म ब्रह्मप्रकाशात्मा ब्रह्मविद्याप्रकाशनः ॥ ८३ ॥
अत्रिवंशप्रभूतात्मा तापसोत्तमवन्दितः ।
आत्मवासी विधेयात्मा ह्यत्रिवंशविवर्धनः ॥ ८४ ॥

प्रवर्तनो निवृत्तात्मा प्रलयोदकसंनिभः।
नारायणो महागर्भो भार्गवप्रियकृत्तमः॥ ८५॥
संकल्पदुःखदलनः संसारतमनाशनः।
त्रिविक्रमस्त्रिधाकारस्त्रिमूर्तिस्त्रिगुणात्मकः॥ ८६॥
भेदत्रयहरश्चैव तापत्रयनिवारकः।
दोषत्रयविभेदी च संशयार्णवखण्डनः॥ ८७॥
असंशयस्त्वसम्मूढो ह्यवादी राजवन्दितः।
राजयोगी महायोगी स्वभावगलितस्तथा॥ ८८॥
पुण्यश्लोकः पवित्रांघ्रिर्ध्यानयोगपरायणः।
ध्यानस्थो ध्यानगम्यश्च विधेयात्मा पुरातनः॥ ८९॥
अविज्ञेयो ह्यन्तरात्मा मुख्यबिम्बसनातनः।
जीवसंजीवनो जीवश्चिद्विलासश्चिदाश्रयः॥ ९०॥
महेन्द्रोऽमरमान्यश्च योगेन्द्रो योगवित्तमः।
योगधर्मस्तथा योगस्तत्त्वस्तत्त्वविनिश्चयः॥ ९१॥
नैकबाहुरनन्तात्मा नैकनामपराक्रमः।
नैकाक्षी नैकपादश्च नाथनाथोत्तमोत्तमः॥ ९२॥
सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।
सहस्त्ररूपदृक् चैव सहस्त्रारमयोद्भवः॥ ९३॥
त्रिपादपुरुषश्चैव त्रिपादूर्ध्वस्तथैव च।
त्र्यम्बकश्च महावीर्यो योगवीर्यविशारदः॥ ९४॥
विजयी विनयी जेता वीतरागी विराजितः।
रुद्रो रौद्रो महाभीमः प्राज्ञमुख्यः सदाशुचिः॥ ९५॥

अन्तर्ज्योतिरनन्तात्मा प्रत्यगात्मा निरन्तरः।
अरूप आत्मरूपश्च सर्वभावविनिर्वृतः॥ ९६ ॥
अन्तःशून्यो बहिःशून्यः शून्यात्मा शून्यभावनः।
अन्तःपूर्णो बहिःपूर्णः पूर्णात्मा पूर्णभावनः॥ ९७ ॥
अन्तस्त्यागी बहिस्त्यागी त्यागात्मा सर्वयोगवान्।
अन्तर्योगी बहिर्योगी सर्वयोगपरायणः॥ ९८ ॥
अन्तर्भोगी बहिर्भोगी सर्वभोगविदुत्तमः।
अन्तर्निष्ठो बहिर्निष्ठः सर्वनिष्ठामयस्तथा॥ ९९ ॥
बाह्यान्तरविमुक्तश्च बाह्यान्तरविवर्जितः।
शान्तः शुद्धो विशुद्धश्च निर्वाणः प्रकृतेः परः॥ १०० ॥
अकालः कालनेमी च कालकालो जनेश्वरः।
कालात्मा कालकर्ता च कालज्ञः कालनाशनः॥ १०१ ॥
कैवल्यपददाता च कैवल्यसुखदायकः।
कैवल्यकलनाधारो निर्भरो हर्षवर्धनः॥ १०२ ॥
हृदयस्थो हृषीकेशो गोविन्दो गर्भवर्जितः।
सकलागमपूज्यश्च निगमो निगमाश्रयः॥ १०३ ॥
पराशक्तिः पराकीर्तिः परावृत्तिर्निधिः स्मृतिः।
परविद्यः पराक्षान्तिर्विभक्तिर्युक्तसद्गतिः॥ १०४ ॥
स्वप्रकाशः प्रकाशात्मा परसंवेदनात्मकः।
स्वसेव्यः स्वविदां स्वात्मा स्वसंवेद्योऽनघः क्षमी॥ १०५ ॥
स्वानुसन्धानशीलात्मा स्वानुसन्धानगोचरः।
स्वानुसन्धानशून्यात्मा स्वानुसन्धानकाश्रयः॥ १०६ ॥

स्वबोधदर्पणोऽभङ्गः कन्दर्पकुलनाशनः।
ब्रह्मचारी ब्रह्मवेत्ता ब्राह्मणो ब्रह्मवित्तमः॥ १०७॥
तत्त्वबोधः सुधावर्षः पावनः पापपावकः।
ब्रह्मसूत्रविधेयात्मा ब्रह्मसूत्रार्थनिर्णयः॥ १०८॥
आत्यन्तिको महाकल्पः संकल्पावर्तनाशनः।
आधिव्याधिहरश्चैव संशयार्णवशोषकः॥ १०९॥
तत्त्वात्मज्ञानसंदेशो महानुभवभावितः।
आत्मानुभवसम्पन्नः स्वानुभावसुखाश्रयः॥ ११०॥
अचिन्त्यश्च बृहद्भानुः प्रमदोत्कर्षनाशनः।
अनिकेतः प्रशान्तात्मा शून्यावासो जगद्वपुः॥ १११॥
चिद्गतिश्चिन्मयश्चक्री मायाचक्रप्रवर्तकः।
सर्ववर्णविदारम्भी सर्वारम्भपरायणः॥ ११२॥
पुराणः प्रवरो दाता सुन्दरः कनकाङ्गदी।
अनसूयात्मजो दत्तः सर्वज्ञः सर्वकामदः॥ ११३॥
कामजित् कामपालश्च कामी कामप्रदागमः।
कामवान् कामपोषश्च सर्वकामनिवर्तकः॥ ११४॥
सर्वकर्मफलोत्पत्तिः सर्वकामफलप्रदः।
सर्वकर्मफलैः पूज्यः सर्वकर्मफलाश्रयः॥ ११५॥
विश्वकर्मा कृतात्मा च कृतज्ञः सर्वसाक्षिकः।
सर्वारम्भपरित्यागी जडोन्मत्तपिशाचवान्॥ ११६॥
भिक्षुर्भैक्षाकरश्चैव भैक्षाहारी निराश्रमी।
अकूलश्चानुकूलश्च विकलो ह्यकलस्तथा॥ ११७॥

८५१

जटिलो वनचारी च दण्डी मुण्डी च गण्डवान्।
देहधर्मविहीनात्मा ह्येकाकी संगवर्जितः॥ ११८॥
आश्रम्यनाश्रमारम्भोऽनाचारी कर्मवर्जितः।
असंदेही च संदेही न किंचिन्न च किंचन॥ ११९॥
नृदेही देहशून्यश्च नाभावी भावनिर्गतः।
नाब्रह्मा च परब्रह्मा स्वयमेव निराकुलः॥ १२०॥
अनघश्चागुरुश्चैव नाथनाथोत्तमो गुरुः।
द्विभुजः प्राकृतश्चैव जनकश्च पितामहः॥ १२१॥
अनात्मा न च नानात्मा नीतिर्नीतिमतां वरः।
सहजः सदृशः सिद्ध एकश्चिन्मात्र एव च॥ १२२॥
न कर्तापि च कर्ता च भोक्ता भोगविवर्जितः।
तुरीयस्तुरीयातीतः स्वच्छः सर्वमयस्तथा॥ १२३॥
सर्वाधिष्ठानरूपश्च सर्वध्येयविवर्जितः।
सर्वलोकनिवासात्मा सकलोत्तमवन्दितः॥ १२४॥
देहभृद्देहकृच्चैव देहात्मा देहभावनः।
देही देहविभक्तश्च देहभावप्रकाशनः॥ १२५॥
लयस्थो लयविच्चैव लयाभावश्च बोधवान्।
लयातीतो लयस्यान्तो लयभावनिवारणः॥ १२६॥
विमुखः प्रमुखश्चैव प्रत्यङ्मुखवदाचरी।
विश्वभुक् विश्वधृग् विश्वो विश्वक्षेमकरस्तथा॥ १२७॥
अविक्षिप्तोऽप्रमादी च परर्द्धिः परमार्थदृक्।
स्वानुभावविहीनश्च स्वानुभावप्रकाशनः॥ १२८॥

निरिन्द्रियश्च निर्बुद्धिर्निराभासो निराकृतः।
निरहंकारो रूपात्मा निर्वपुः सकलाश्रयः॥ १२९॥
शोकदुःखहरश्चैव भोगमोक्षफलप्रदः।
सुप्रसन्नस्तथा सूक्ष्मः शब्दब्रह्मार्थसंग्रहः॥ १३०॥
आगमापायशून्यश्च स्थानदश्च सतां गतिः।
अकृतः सुकृतश्चैव कृतकर्मविनिर्वृतः॥ १३१॥
भेदत्रयहरश्चैव देहत्रयविनिर्गतः।
सर्वकाममयश्चैव सर्वकामनिवर्तकः॥ १३२॥
सिद्धेश्वरोऽजरः पञ्चबाणदर्पहुताशनः।
चतुरक्षरबीजात्मा स्वभूश्चित्कीर्तिभूषणः॥ १३३॥
अगाधबुद्धिरक्षुब्धश्चन्द्रसूर्याग्निलोचनः।
यमदंष्ट्रोऽतिसंहर्ता परमानन्दसागरः॥ १३४॥
लीलाविश्वम्भरो भानुर्भैरवो भीमलोचनः।
ब्रह्मचर्माम्बरः कालस्त्वचलश्चलनान्तकः॥ १३५॥
आदिदेवो जगद्योनिर्वासवारिविमर्दनः।
विकर्मकर्मकर्मज्ञोऽनन्यगमकोऽगमः॥ १३६॥
अबद्धकर्मशून्यश्च कामरागकुलक्षयः।
योगान्धकारमथनः पद्मजन्मादिवन्दितः॥ १३७॥
भक्तकामोऽग्रजश्चक्री भावनिर्भावभावकः।
भेदान्तको महानग्र्यो निगूहो गोचरान्तकः॥ १३८॥
कालाग्निशमनः शंखचक्रपद्मगदाधरः।
दीप्तो दीनपतिः शास्ता स्वच्छन्दो मुक्तिदायकः॥ १३९॥

व्योमधर्माम्बरो भेत्ता भस्मधारी धराधरः।
धर्मगुप्तोऽन्वयात्मा च व्यतिरेकार्थनिर्णयः॥ १४०॥
एकोऽनेकगुणाभासाभासनिर्भासवर्जितः।
भावाभावस्वभावात्मा भावाभावविभाववित्॥ १४१॥
योगिहृदयविश्रामोऽनन्तविद्याविवर्धनः।
विघ्नान्तकस्त्रिकालज्ञस्तत्त्वात्मा ज्ञानसागरः॥ १४२॥

फलश्रुतिः

इतीदं दत्तसाहस्त्रं सायं प्रातः पठेत्तु यः।
स इहामुत्र लभते निर्वाणं परमं सुखम्॥ १४३॥
गुरुवारे दत्तभक्तो भक्तिभावसमन्वितः।
पठेत् सदैव यो ह्येतत् स लभेच्चिन्तितं ध्रुवम्॥ १४४॥

॥ इति श्रीमद्दत्तात्रेयपुराणोक्तं श्रीदत्तात्रेयसहस्त्रनामस्तोत्रं सम्पूर्णम्॥

॥ श्रीदत्तात्रेयाय नमः ॥

# श्रीदत्तात्रेयसहस्त्रनामावलिः

१ ॐ दत्तात्रेयाय नमः।
२ ॐ महायोगिने नमः।
३ ॐ योगेशाय नमः।
४ ॐ अमरप्रभवे नमः।
५ ॐ मुनये नमः।
६ ॐ दिगम्बराय नमः।
७ ॐ बालाय नमः।
८ ॐ मायामुक्ताय नमः।
९ ॐ मदापहाय नमः।
१० ॐ अवधूताय नमः।
११ ॐ महानाथाय नमः।
१२ ॐ शंकराय नमः।
१३ ॐ अमरवल्लभाय नमः।
१४ ॐ महादेवाय नमः।
१५ ॐ आदिदेवाय नमः।
१६ ॐ पुराणप्रभवे नमः।
१७ ॐ ईश्वराय नमः।
१८ ॐ सत्त्वकृते नमः।
१९ ॐ सत्त्वभृते नमः।
२० ॐ भावाय नमः।
२१ ॐ सत्त्वात्मने नमः।
२२ ॐ सत्त्वसागराय नमः।
२३ ॐ सत्त्वविदे नमः।
२४ ॐ सत्त्वसाक्षिणे नमः।
२५ ॐ सत्त्वसाध्याय नमः।
२६ ॐ अमराधिपाय नमः।
२७ ॐ भूतकृते नमः।
२८ ॐ भूतभृते नमः।
२९ ॐ भूतात्मने नमः।
३० ॐ भूतसम्भवाय नमः।
३१ ॐ भूतभावाय नमः।
३२ ॐ भवाय नमः।
३३ ॐ भूतविदे नमः।
३४ ॐ भूतकारणाय नमः।
३५ ॐ भूतसाक्षिणे नमः।
३६ ॐ प्रभूतये नमः।
३७ ॐ भूतानां परमायै गतये नमः।
३८ ॐ भूतसंगविहीनात्मने नमः।
३९ ॐ भूतात्मने नमः।
४० ॐ भूतशंकराय नमः।
४१ ॐ भूतनाथाय नमः।
४२ ॐ महानाथाय नमः।
४३ ॐ आदिनाथाय नमः।
४४ ॐ महेश्वराय नमः।
४५ ॐ सर्वभूतनिवासात्मने नमः।
४६ ॐ भूतसंतापनाशनाय नमः।

४७ ॐ सर्वात्मने नमः।
४८ ॐ सर्वभृते नमः।
४९ ॐ सर्वस्मै नमः।
५० ॐ सर्वज्ञाय नमः।
५१ ॐ सर्वनिर्णयाय नमः।
५२ ॐ सर्वसाक्षिणे नमः।
५३ ॐ बृहद्धानवे नमः।
५४ ॐ सर्वविदे नमः।
५५ ॐ सर्वमङ्गलाय नमः।
५६ ॐ शान्ताय नमः।
५७ ॐ सत्याय नमः।
५८ ॐ समाय नमः।
५९ ॐ पूर्णाय नमः।
६० ॐ एकाकिने नमः।
६१ ॐ कमलापतये नमः।
६२ ॐ रामाय नमः।
६३ ॐ रामप्रियाय नमः।
६४ ॐ विरामाय नमः।
६५ ॐ रामकारणाय नमः।
६६ ॐ शुद्धात्मने नमः।
६७ ॐ पावनाय नमः।
६८ ॐ अनन्ताय नमः।
६९ ॐ प्रतीताय नमः।
७० ॐ परमार्थभृते नमः।
७१ ॐ हंससाक्षिणे नमः।
७२ ॐ विभवे नमः।
७३ ॐ प्रभवे नमः।
७४ ॐ प्रलयाय नमः।
७५ ॐ सिद्धात्मने नमः।
७६ ॐ परमात्मने नमः।
७७ ॐ सिद्धानां परमायै गतये नमः।
७८ ॐ सिद्धिसिद्धाय नमः।
७९ ॐ साध्याय नमः।
८० ॐ साधनाय नमः।
८१ ॐ उत्तमाय नमः।
८२ ॐ सुलक्षणाय नमः।
८३ ॐ सुमेधाविने नमः।
८४ ॐ विद्यावते नमः।
८५ ॐ विगतान्तराय नमः।
८६ ॐ विज्वराय नमः।
८७ ॐ महाबाहवे नमः।
८८ ॐ बहुलानन्दवर्धनाय नमः।
८९ ॐ अव्यक्तपुरुषाय नमः।
९० ॐ प्राज्ञाय नमः।
९१ ॐ परज्ञाय नमः।
९२ ॐ परमार्थदृशे नमः।
९३ ॐ परापरविनिर्मुक्ताय नमः।
९४ ॐ युक्ताय नमः।
९५ ॐ तत्त्वप्रकाशवते नमः।
९६ ॐ दयावते नमः।
९७ ॐ भगवते नमः।
९८ ॐ भाविने नमः।
९९ ॐ भावात्मने नमः।
१०० ॐ भावकारणाय नमः।
१०१ ॐ भवसंतापनाशाय नमः।
१०२ ॐ पुष्पवते नमः।

१०३ ॐ पण्डिताय नमः।
१०४ ॐ बुधाय नमः।
१०५ ॐ प्रत्यक्षवस्तुने नमः।
१०६ ॐ विश्वात्मने नमः।
१०७ ॐ प्रत्यग्ब्रह्मसनातनाय नमः।
१०८ ॐ प्रमाणविगताय नमः।
१०९ ॐ प्रत्याहारनियोजकाय नमः।
११० ॐ प्रणवाय नमः।
१११ ॐ प्रणवातीताय नमः।
११२ ॐ प्रमुखाय नमः।
११३ ॐ प्रलयात्मकाय नमः।
११४ ॐ मृत्युंजयाय नमः।
११५ ॐ विविक्तात्मने नमः।
११६ ॐ शंकरात्मने नमः।
११७ ॐ परस्मै वपुषे नमः।
११८ ॐ परमाय नमः।
११९ ॐ तनुविज्ञेयाय नमः।
१२० ॐ परमात्मनि संस्थिताय नमः।
१२१ ॐ प्रबोधकलनाधाराय नमः।
१२२ ॐ प्रभावप्रवरोत्तमाय नमः।
१२३ ॐ चिदम्बराय नमः।
१२४ ॐ चिद्विलासाय नमः।
१२५ ॐ चिदाकाशाय नमः।
१२६ ॐ चिदुत्तमाय नमः।
१२७ ॐ चित्तचैतन्यचित्तात्मने नमः।
१२८ ॐ देवानां परमायै गतये नमः।
१२९ ॐ अचेत्याय नमः।
१३० ॐ चेतनाधाराय नमः।
१३१ ॐ चेतनाचित्तविक्रमाय नमः।
१३२ ॐ चित्तात्मने नमः।
१३३ ॐ चेतनारूपाय नमः।
१३४ ॐ लसत्पङ्कजलोचनाय नमः।
१३५ ॐ परंब्रह्मणे नमः।
१३६ ॐ परंज्योतिषे नमः।
१३७ ॐ परंधाम्ने नमः।
१३८ ॐ परंतपसे नमः।
१३९ ॐ परंसूत्राय नमः।
१४० ॐ परतन्त्राय नमः।
१४१ ॐ पवित्राय नमः।
१४२ ॐ परमोहवते नमः।
१४३ ॐ क्षेत्रज्ञाय नमः।
१४४ ॐ क्षेत्रगाय नमः।
१४५ ॐ क्षेत्राय नमः।
१४६ ॐ क्षेत्राधाराय नमः।
१४७ ॐ पुरञ्जनाय नमः।
१४८ ॐ क्षेत्रशून्याय नमः।
१४९ ॐ लोकसाक्षिणे नमः।
१५० ॐ क्षेत्रवते नमः।
१५१ ॐ बहुनायकाय नमः।
१५२ ॐ योगेन्द्राय नमः।
१५३ ॐ योगपूज्याय नमः।
१५४ ॐ योग्याय नमः।
१५५ ॐ आत्मविदां शुचये नमः।
१५६ ॐ योगमायाधराय नमः।
१५७ ॐ स्थाणवे नमः।
१५८ ॐ अचलाय नमः।
१५९ ॐ कमलापतये नमः।
१६० ॐ योगेशाय नमः।

१६१ ॐ योगनिर्मात्रे नमः।
१६२ ॐ योगज्ञानप्रकाशनाय नमः।
१६३ ॐ योगपालाय नमः।
१६४ ॐ लोकपालाय नमः।
१६५ ॐ संसारतमनाशनाय नमः।
१६६ ॐ गुह्याय नमः।
१६७ ॐ गुह्यतमाय नमः।
१६८ ॐ गुप्ताय नमः।
१६९ ॐ मुक्ताय नमः।
१७० ॐ युक्ताय नमः।
१७१ ॐ सनातनाय नमः।
१७२ ॐ गहनाय नमः।
१७३ ॐ गगनाकाराय नमः।
१७४ ॐ गम्भीराय नमः।
१७५ ॐ गणनायकाय नमः।
१७६ ॐ गोविन्दाय नमः
१७७ ॐ गोपतये नमः।
१७८ ॐ गोप्त्रे नमः।
१७९ ॐ गोभागाय नमः।
१८० ॐ भावसंस्थिताय नमः।
१८१ ॐ गोसाक्षिणे नमः।
१८२ ॐ गोतमारये नमः।
१८३ ॐ गान्धाराय नमः।
१८४ ॐ गगनाकृतये नमः।
१८५ ॐ योगयुक्ताय नमः।
१८६ ॐ भोगयुक्ताय नमः।
१८७ ॐ शंकामुक्तसमाधिमते नमः।
१८८ ॐ सहजाय नमः।
१८९ ॐ सकलेशानाय नमः।
१९० ॐ कार्तवीर्यवरप्रदाय नमः।
१९१ ॐ सरजसे नमः।
१९२ ॐ विरजसे नमः।
१९३ ॐ पुंसे नमः।
१९४ ॐ पावनाय नमः।
१९५ ॐ पापनाशनाय नमः।
१९६ ॐ परावरविनिर्मुक्ताय नमः।
१९७ ॐ परंज्योतिषे नमः।
१९८ ॐ पुरातनाय नमः।
१९९ ॐ नानाज्योतिषे नमः।
२०० ॐ अनेकात्मने नमः।
२०१ ॐ स्वयंज्योतिषे नमः।
२०२ ॐ सदाशिवाय नमः।
२०३ ॐ दिव्यज्योतिर्मयाय नमः।
२०४ ॐ सत्यविज्ञानभास्कराय नमः।
२०५ ॐ नित्यशुद्धाय नमः।
२०६ ॐ परस्मै नमः।
२०७ ॐ पूर्णाय नमः।
२०८ ॐ प्रकाशाय नमः।
२०९ ॐ प्रकटोद्भवाय नमः।
२१० ॐ प्रमादविगताय नमः।
२११ ॐ परेशाय नमः।
२१२ ॐ परविक्रमाय नमः।
२१३ ॐ योगिने नमः।
२१४ ॐ योगाय नमः।
२१५ ॐ योगपाय नमः।
२१६ ॐ योगाभ्यासप्रकाशनाय नमः।
२१७ ॐ योक्त्रे नमः।
२१८ ॐ मोक्त्रे नमः।

२१९ ॐ विधात्रे नमः।
२२० ॐ त्रात्रे नमः।
२२१ ॐ पात्रे नमः।
२२२ ॐ निरायुधाय नमः।
२२३ ॐ नित्यमुक्ताय नमः।
२२४ ॐ नित्ययुक्ताय नमः।
२२५ ॐ सत्याय नमः।
२२६ ॐ सत्यपराक्रमाय नमः।
२२७ ॐ सत्त्वशुद्धिकराय नमः।
२२८ ॐ सत्त्वाय नमः।
२२९ ॐ सत्त्वभृतां गतये नमः।
२३० ॐ श्रीधराय नमः।
२३१ ॐ श्रीवपुषे नमः।
२३२ ॐ श्रीमते नमः।
२३३ ॐ श्रीनिवासाय नमः।
२३४ ॐ अमरार्चिताय नमः।
२३५ ॐ श्रीनिधये नमः।
२३६ ॐ श्रीपतये नमः।
२३७ ॐ श्रेष्ठाय नमः।
२३८ ॐ श्रेयस्काय नमः।
२३९ ॐ चरमाश्रयाय नमः।
२४० ॐ त्यागिने नमः।
२४१ ॐ त्यागार्थसम्पन्नाय नमः।
२४२ ॐ त्यागात्मने नमः।
२४३ ॐ त्यागविग्रहाय नमः।
२४४ ॐ त्यागलक्षणसिद्धात्मने नमः।
२४५ ॐ त्यागज्ञाय नमः।
२४६ ॐ त्यागकारणाय नमः।
२४७ ॐ भोगाय नमः।
२४८ ॐ भोक्त्रे नमः।
२४९ ॐ भोग्याय नमः।
२५० ॐ भोगसाधनकारणाय नमः।
२५१ ॐ भोगिने नमः।
२५२ ॐ भोगार्थसम्पन्नाय नमः।
२५३ ॐ भोगज्ञानप्रकाशनाय नमः।
२५४ ॐ केवलाय नमः।
२५५ ॐ केशवाय नमः।
२५६ ॐ कृष्णाय नमः।
२५७ ॐ कंवाससे नमः।
२५८ ॐ कमलालयाय नमः।
२५९ ॐ कमलासनपूज्याय नमः।
२६० ॐ हरये नमः।
२६१ ॐ अज्ञानखण्डनाय नमः।
२६२ ॐ महात्मने नमः।
२६३ ॐ महदादये नमः।
२६४ ॐ महेशोत्तमवन्दिताय नमः।
२६५ ॐ मनोबुद्धिविहीनात्मने नमः।
२६६ ॐ मानात्मने नमः।
२६७ ॐ मानवाधिपाय नमः।
२६८ ॐ भुवनेशाय नमः।
२६९ ॐ विभूतये नमः।
२७० ॐ धृतये नमः।
२७१ ॐ मेधायै नमः।
२७२ ॐ स्मृतये नमः।
२७३ ॐ दयायै नमः।
२७४ ॐ दुःखदावानलाय नमः।
२७५ ॐ बुद्धाय नमः।
२७६ ॐ प्रबुद्धाय नमः।

२७७ ॐ परमेश्वराय नमः।
२७८ ॐ कामघ्ने नमः।
२७९ ॐ क्रोधघ्ने नमः।
२८० ॐ दम्भदर्पमदापहाय नमः।
२८१ ॐ अज्ञानतिमिरारये नमः।
२८२ ॐ भवारये नमः।
२८३ ॐ भुवनेश्वराय नमः।
२८४ ॐ रूपकृते नमः।
२८५ ॐ रूपभृते नमः।
२८६ ॐ रूपिणे नमः।
२८७ ॐ रूपात्मने नमः।
२८८ ॐ रूपकारणाय नमः।
२८९ ॐ रूपज्ञाय नमः।
२९० ॐ रूपसाक्षिणे नमः।
२९१ ॐ नामरूपाय नमः।
२९२ ॐ गुणान्तकाय नमः।
२९३ ॐ अप्रमेयाय नमः।
२९४ ॐ प्रमेयाय नमः।
२९५ ॐ प्रमाणाय नमः।
२९६ ॐ प्रणवाश्रयाय नमः।
२९७ ॐ प्रमाणरहिताय नमः।
२९८ ॐ अचिन्त्याय नमः।
२९९ ॐ चेतनाविगताय नमः।
३०० ॐ अजराय नमः।
३०१ ॐ अक्षराय नमः।
३०२ ॐ अक्षरमुक्ताय नमः।
३०३ ॐ विज्वराय नमः।
३०४ ॐ ज्वरनाशनाय नमः।
३०५ ॐ विशिष्टाय नमः।
३०६ ॐ वित्तशास्त्रिणे नमः।
३०७ ॐ दृष्टाय नमः।
३०८ ॐ दृष्टान्तवर्जिताय नमः।
३०९ ॐ गुणेशाय नमः।
३१० ॐ गुणकायाय नमः।
३११ ॐ गुणात्मने नमः।
३१२ ॐ गुणभावनाय नमः।
३१३ ॐ अनन्तगुणसम्पन्नाय नमः।
३१४ ॐ गुणगर्भाय नमः।
३१५ ॐ गुणाधिपाय नमः।
३१६ ॐ गणेशाय नमः।
३१७ ॐ गुणनाथाय नमः।
३१८ ॐ गुणात्मने नमः।
३१९ ॐ गणभावनाय नमः।
३२० ॐ गणबन्धवे नमः।
३२१ ॐ विवेकात्मने नमः।
३२२ ॐ गुणयुक्ताय नमः।
३२३ ॐ पराक्रमिणे नमः।
३२४ ॐ अतर्क्याय नमः।
३२५ ॐ क्रतवे नमः।
३२६ ॐ अग्नये नमः।
३२७ ॐ कृतज्ञाय नमः।
३२८ ॐ सफलाश्रयाय नमः।
३२९ ॐ यज्ञाय नमः।
३३० ॐ यज्ञफलदाय नमः।
३३१ ॐ यज्ञाय नमः।
३३२ ॐ ईज्याय नमः।
३३३ ॐ अमरोत्तमाय नमः।
३३४ ॐ हिरण्यगर्भाय नमः।

३३५ ॐ श्रीगर्भाय नमः।
३३६ ॐ खगर्भाय नमः।
३३७ ॐ कुणपेश्वराय नमः।
३३८ ॐ मायागर्भाय नमः।
३३९ ॐ लोकगर्भाय नमः।
३४० ॐ स्वयम्भुवे नमः।
३४१ ॐ भुवनान्तकाय नमः।
३४२ ॐ निष्पापाय नमः।
३४३ ॐ निबिडाय नमः।
३४४ ॐ नन्दिने नमः।
३४५ ॐ बोधिने नमः।
३४६ ॐ बोधसमाश्रयाय नमः।
३४७ ॐ बोधात्मने नमः।
३४८ ॐ बोधनात्मने नमः।
३४९ ॐ भेदवैतण्डखण्डनाय नमः।
३५० ॐ स्वाभाव्याय नमः।
३५१ ॐ भावनिर्मुक्ताय नमः।
३५२ ॐ व्यक्ताय नमः।
३५३ ॐ अव्यक्तसमाश्रयाय नमः।
३५४ ॐ नित्यतृप्ताय नमः।
३५५ ॐ निराभासाय नमः।
३५६ ॐ निर्वाणाय नमः।
३५७ ॐ शरणाय नमः।
३५८ ॐ सुहृदे नमः।
३५९ ॐ गुह्येशाय नमः।
३६० ॐ गुणगम्भीराय नमः।
३६१ ॐ गुणदोषनिवारणाय नमः।
३६२ ॐ गुणसंगविहीनाय नमः।
३६३ ॐ योगारेर्दर्पनाशनाय नमः।
३६४ ॐ आनन्दाय नमः।
३६५ ॐ परमानन्दाय नमः।
३६६ ॐ स्वानन्दसुखवर्धनाय नमः।
३६७ ॐ सत्यानन्दाय नमः।
३६८ ॐ चिदानन्दाय नमः।
३६९ ॐ सर्वानन्दपरायणाय नमः।
३७० ॐ सद्रूपाय नमः।
३७१ ॐ सहजाय नमः।
३७२ ॐ सत्याय नमः।
३७३ ॐ स्वानन्दाय नमः।
३७४ ॐ सुमनोहराय नमः।
३७५ ॐ सर्वस्मै नमः।
३७६ ॐ सर्वान्तराय नमः।
३७७ ॐ पूर्वापूर्वतराय नमः।
३७८ ॐ खमयाय नमः।
३७९ ॐ खपराय नमः।
३८० ॐ खादये नमः।
३८१ ॐ खंब्रह्मणे नमः।
३८२ ॐ खतनवे नमः।
३८३ ॐ खगाय नमः।
३८४ ॐ खवाससे नमः।
३८५ ॐ खविहीनाय नमः।
३८६ ॐ खनिधये नमः।
३८७ ॐ खपराश्रयाय नमः।
३८८ ॐ अनन्ताय नमः।
३८९ ॐ आदिरूपाय नमः।
३९० ॐ सूर्यमण्डलमध्यगाय नमः।
३९१ ॐ अमोघाय नमः।

३९२ ॐ परमामोघाय नमः।
३९३ ॐ परोक्षाय नमः।
३९४ ॐ परदाय नमः।
३९५ ॐ कवये नमः।
३९६ ॐ विश्वचक्षुषे नमः।
३९७ ॐ विश्वसाक्षिणे नमः।
३९८ ॐ विश्वबाहवे नमः।
३९९ ॐ धनेश्वराय नमः।
४०० ॐ धनंजयाय नमः।
४०१ ॐ महातेजसे नमः।
४०२ ॐ तेजिष्ठाय नमः।
४०३ ॐ तैजसाय नमः।
४०४ ॐ सुखिने नमः।
४०५ ॐ ज्योतिषे नमः।
४०६ ॐ ज्योतिर्मयाय नमः।
४०७ ॐ जेत्रे नमः।
४०८ ॐ ज्योतिषां ज्योतिरात्मकाय नमः।
४०९ ॐ ज्योतिषामपि ज्योतिषे नमः।
४१० ॐ जनकाय नमः।
४११ ॐ जनमोहनाय नमः।
४१२ ॐ जितेन्द्रियाय नमः।
४१३ ॐ जितक्रोधाय नमः।
४१४ ॐ जितात्मने नमः।
४१५ ॐ जितमानसाय नमः।
४१६ ॐ जितसंगाय नमः।
४१७ ॐ जितप्राणाय नमः।
४१८ ॐ जितसंसारवासनाय नमः।
४१९ ॐ निर्वासनाय नमः।
४२० ॐ निरालम्बाय नमः।
४२१ ॐ निर्योगक्षेमवर्जिताय नमः।
४२२ ॐ निरीहाय नमः।
४२३ ॐ निरहंकाराय नमः।
४२४ ॐ निराशिषे नमः।
४२५ ॐ निरुपाधिकाय नमः।
४२६ ॐ नित्यबोधाय नमः।
४२७ ॐ विविक्तात्मने नमः।
४२८ ॐ विशुद्धोत्तमगौरवाय नमः।
४२९ ॐ विद्यार्थिने नमः।
४३० ॐ परमार्थिने नमः।
४३१ ॐ श्रद्धार्थिने नमः।
४३२ ॐ साधनात्मकाय नमः।
४३३ ॐ प्रत्याहारिणे नमः।
४३४ ॐ निराहारिणे नमः।
४३५ ॐ सर्वाहारपरायणाय नमः।
४३६ ॐ नित्यशुद्धाय नमः।
४३७ ॐ निराकांक्षिणे नमः।
४३८ ॐ पारायणपरायणाय नमः।
४३९ ॐ अणोरणुतराय नमः।
४४० ॐ सूक्ष्माय नमः।
४४१ ॐ स्थूलाय नमः।
४४२ ॐ स्थूलतराय नमः।
४४३ ॐ एकस्मै नमः।
४४४ ॐ अनेकरूपाय नमः।
४४५ ॐ विश्वरूपाय नमः।
४४६ ॐ सनातनाय नमः।
४४७ ॐ नैकरूपाय नमः।
४४८ ॐ विरूपात्मने नमः।
४४९ ॐ नैकबोधमयाय नमः।

४५० ॐ नैकनाममयाय नमः।
४५१ ॐ नैकविद्याविवर्धनाय नमः।
४५२ ॐ एकस्मै नमः।
४५३ ॐ एकान्तिकाय नमः।
४५४ ॐ नानाभावविवर्जिताय नमः।
४५५ ॐ एकाक्षराय नमः।
४५६ ॐ बीजाय नमः।
४५७ ॐ पूर्णबिम्बाय नमः।
४५८ ॐ सनातनाय नमः।
४५९ ॐ मन्त्रवीर्याय नमः।
४६० ॐ मन्त्रबीजाय नमः।
४६१ ॐ शास्त्रवीर्याय नमः।
४६२ ॐ जगत्पतये नमः।
४६३ ॐ नानावीर्यधराय नमः।
४६४ ॐ शक्रेशाय नमः।
४६५ ॐ पृथिवीपतये नमः।
४६६ ॐ प्राणेशाय नमः।
४६७ ॐ प्राणदाय नमः।
४६८ ॐ प्राणाय नमः।
४६९ ॐ प्राणायामपरायणाय नमः।
४७० ॐ प्राणपञ्चकनिर्मुक्ताय नमः।
४७१ ॐ कोशपञ्चकवर्जिताय नमः।
४७२ ॐ निश्चलाय नमः।
४७३ ॐ निष्कलाय नमः।
४७४ ॐ असंगाय नमः।
४७५ ॐ निष्प्रपञ्चाय नमः।
४७६ ॐ निरामयाय नमः।
४७७ ॐ निराधाराय नमः।
४७८ ॐ निराकाराय नमः।
४७९ ॐ निर्विकाराय नमः।
४८० ॐ निरञ्जनाय नमः।
४८१ ॐ निष्प्रतीताय नमः।
४८२ ॐ निराभासाय नमः।
४८३ ॐ निरासक्ताय नमः।
४८४ ॐ निराकुलाय नमः।
४८५ ॐ निष्ठासर्वगताय नमः।
४८६ ॐ निरारम्भाय नमः।
४८७ ॐ निराश्रयाय नमः।
४८८ ॐ निरन्तराय नमः।
४८९ ॐ सर्वगोप्त्रे नमः।
४९० ॐ शान्ताय नमः।
४९१ ॐ दान्ताय नमः।
४९२ ॐ महामुनये नमः।
४९३ ॐ निःशब्दाय नमः।
४९४ ॐ सुकृताय नमः।
४९५ ॐ स्वस्थाय नमः।
४९६ ॐ सत्यवादिने नमः।
४९७ ॐ सुरेश्वराय नमः।
४९८ ॐ ज्ञानदाय नमः।
४९९ ॐ ज्ञानविज्ञानिने नमः।
५०० ॐ ज्ञानात्मने नमः।
५०१ ॐ आनन्दपूरिताय नमः।
५०२ ॐ ज्ञानयज्ञविदां दक्षाय नमः।
५०३ ॐ ज्ञानाग्नये नमः।
५०४ ॐ ज्वलनाय नमः।
५०५ ॐ बुधाय नमः।
५०६ ॐ दयावते नमः।
५०७ ॐ भवरोगारये नमः।

५०८ ॐ चिकित्साचरमागतये नमः।
५०९ ॐ चन्द्रमण्डलमध्यस्थाय नमः।
५१० ॐ चन्द्रकोटिसुशीतलाय नमः।
५११ ॐ यन्त्रकृते नमः।
५१२ ॐ परमाय नमः।
५१३ ॐ यन्त्रिणे नमः।
५१४ ॐ यन्त्रारूढपराजिताय नमः।
५१५ ॐ यन्त्रविदे नमः।
५१६ ॐ यन्त्रवाससे नमः।
५१७ ॐ यन्त्राधाराय नमः।
५१८ ॐ धराधराय नमः।
५१९ ॐ तत्त्वज्ञाय नमः।
५२० ॐ तत्त्वभूतात्मने नमः।
५२१ ॐ महत्तत्त्वप्रकाशनाय नमः।
५२२ ॐ तत्त्वसंख्यानयोगज्ञाय नमः।
५२३ ॐ सांख्यशास्त्रप्रवर्तकाय नमः।
५२४ ॐ अनन्तविक्रमाय नमः।
५२५ ॐ देवाय नमः।
५२६ ॐ माधवाय नमः।
५२७ ॐ धनेश्वराय नमः।
५२८ ॐ साधवे नमः।
५२९ ॐ साधुवरिष्ठात्मने नमः।
५३० ॐ सावधानाय नमः।
५३१ ॐ अमरोत्तमाय नमः।
५३२ ॐ निःसंकल्पाय नमः।
५३३ ॐ निराधाराय नमः।
५३४ ॐ दुर्धराय नमः।
५३५ ॐ आत्मविदे नमः।
५३६ ॐ पत्ये नमः।
५३७ ॐ आरोग्यसुखदाय नमः।
५३८ ॐ प्रवराय नमः।
५३९ ॐ वासवाय नमः।
५४० ॐ परेशाय नमः।
५४१ ॐ परमोदाराय नमः।
५४२ ॐ प्रत्यक्चैतन्यदुर्गमाय नमः।
५४३ ॐ दुराधर्षाय नमः।
५४४ ॐ दुरावासाय नमः।
५४५ ॐ दूरत्वपरिनाशनाय नमः।
५४६ ॐ वेदविदे नमः।
५४७ ॐ वेदकृते नमः।
५४८ ॐ वेदाय नमः।
५४९ ॐ वेदात्मने नमः।
५५० ॐ विमलाशयाय नमः।
५५१ ॐ विविक्तसेविने नमः।
५५२ ॐ संसारश्रमनाशनकाय नमः।
५५३ ॐ ब्रह्मयोनये नमः।
५५४ ॐ बृहद्योनये नमः।
५५५ ॐ विश्वयोनये नमः।
५५६ ॐ विदेहवते नमः।
५५७ ॐ विशालाक्षाय नमः।
५५८ ॐ विश्वनाथाय नमः।
५५९ ॐ हाटकाङ्गदभूषणाय नमः।
५६० ॐ अबाध्याय नमः।
५६१ ॐ जगदाराध्याय नमः।
५६२ ॐ जगदार्जवपालनाय नमः।
५६३ ॐ जनवते नमः।
५६४ ॐ धनवते नमः।
५६५ ॐ धर्मिणे नमः।

५६६ ॐ धर्मगाय नमः।
५६७ ॐ धर्मवर्धनाय नमः।
५६८ ॐ अमृताय नमः।
५६९ ॐ शाश्वताय नमः।
५७० ॐ साध्याय नमः।
५७१ ॐ सिद्धिदाय नमः।
५७२ ॐ सुमनोहराय नमः।
५७३ ॐ खलुब्रह्मखलुस्थानाय नमः।
५७४ ॐ मुनीनां परमायै गतये नमः।
५७५ ॐ उपद्रष्ट्रे नमः।
५७६ ॐ श्रेष्ठाय नमः।
५७७ ॐ शुचये नमः।
५७८ ॐ भूताय नमः।
५७९ ॐ अनामयाय नमः।
५८० ॐ वेदसिद्धान्तवेद्याय नमः।
५८१ ॐ मानसाह्लादवर्धनाय नमः।
५८२ ॐ देहादन्याय नमः।
५८३ ॐ गुणादन्याय नमः।
५८४ ॐ लोकादन्याय नमः।
५८५ ॐ विवेकविदे नमः।
५८६ ॐ दुष्टस्वप्नहराय नमः।
५८७ ॐ गुरवे नमः।
५८८ ॐ गुरुवरोत्तमाय नमः।
५८९ ॐ कर्मिणे नमः।
५९० ॐ कर्मविनिर्मुक्ताय नमः।
५९१ ॐ संन्यासिने नमः।
५९२ ॐ साधकेश्वराय नमः।
५९३ ॐ सर्वभावविहीनाय नमः।
५९४ ॐ तृष्णासंगनिवारकाय नमः।
५९५ ॐ त्यागिने नमः।
५९६ ॐ त्यागवपुषे नमः।
५९७ ॐ त्यागाय नमः।
५९८ ॐ त्यागदानविवर्जिताय नमः।
५९९ ॐ त्यागकारणत्यागात्मने नमः।
६०० ॐ सद्गुरवे नमः।
६०१ ॐ सुखदायकाय नमः।
६०२ ॐ दक्षाय नमः।
६०३ ॐ दक्षादिवन्द्याय नमः।
६०४ ॐ ज्ञानवादप्रवर्तकाय नमः।
६०५ ॐ शब्दब्रह्ममयात्मने नमः।
६०६ ॐ शब्दब्रह्मप्रकाशवते नमः।
६०७ ॐ ग्रसिष्णवे नमः।
६०८ ॐ प्रभविष्णवे नमः।
६०९ ॐ सहिष्णवे नमः।
६१० ॐ विगतान्तराय नमः।
६११ ॐ विद्वत्तमाय नमः।
६१२ ॐ महावन्द्याय नमः।
६१३ ॐ विशालोत्तमवाङ्मुनये नमः।
६१४ ॐ ब्रह्मविदे नमः।
६१५ ॐ ब्रह्मभावाय नमः।
६१६ ॐ ब्रह्मर्षये नमः।
६१७ ॐ ब्राह्मणप्रियाय नमः।
६१८ ॐ ब्रह्मणे नमः।
६१९ ॐ ब्रह्मप्रकाशात्मने नमः।
६२० ॐ ब्रह्मविद्याप्रकाशनाय नमः।
६२१ ॐ अत्रिवंशप्रभूतात्मने नमः।
६२२ ॐ तापसोत्तमवन्दिताय नमः।
६२३ ॐ आत्मवासिने नमः।

६२४ ॐ विधेयात्मने नमः।
६२५ ॐ अत्रिवंशविवर्धनाय नमः।
६२६ ॐ प्रवर्तनाय नमः।
६२७ ॐ निवृत्तात्मने नमः।
६२८ ॐ प्रलयोदकसंनिभाय नमः।
६२९ ॐ नारायणाय नमः।
६३० ॐ महागर्भाय नमः।
६३१ ॐ भार्गवप्रियकृत्तमाय नमः।
६३२ ॐ संकल्पदुःखदलनाय नमः।
६३३ ॐ संसारतमनाशनाय नमः।
६३४ ॐ त्रिविक्रमाय नमः।
६३५ ॐ त्रिधाकाराय नमः।
६३६ ॐ त्रिमूर्तये नमः।
६३७ ॐ त्रिगुणात्मकाय नमः।
६३८ ॐ भेदत्रयहराय नमः।
६३९ ॐ तापत्रयनिवारकाय नमः।
६४० ॐ दोषत्रयविभेदिने नमः।
६४१ ॐ संशयार्णवखण्डनाय नमः।
६४२ ॐ असंशयाय नमः।
६४३ ॐ असम्मूढाय नमः।
६४४ ॐ अवादिने नमः।
६४५ ॐ राजवन्दिताय नमः।
६४६ ॐ राजयोगिने नमः।
६४७ ॐ महायोगिने नमः।
६४८ ॐ स्वभावगलिताय नमः।
६४९ ॐ पुण्यश्लोकाय नमः।
६५० ॐ पवित्रांघ्रये नमः।
६५१ ॐ ध्यानयोगपरायणाय नमः।
६५२ ॐ ध्यानस्थाय नमः।
६५३ ॐ ध्यानगम्याय नमः।
६५४ ॐ विधेयात्मने नमः।
६५५ ॐ पुरातनाय नमः।
६५६ ॐ अविज्ञेयाय नमः।
६५७ ॐ अन्तरात्मने नमः।
६५८ ॐ मुख्यबिम्बसनातनाय नमः।
६५९ ॐ जीवसंजीवनाय नमः।
६६० ॐ जीवाय नमः।
६६१ ॐ चिद्विलासाय नमः।
६६२ ॐ चिदाश्रयाय नमः।
६६३ ॐ महेन्द्राय नमः।
६६४ ॐ अमरमान्याय नमः।
६६५ ॐ योगेन्द्राय नमः।
६६६ ॐ योगवित्तमाय नमः।
६६७ ॐ योगधर्माय नमः।
६६८ ॐ योगाय नमः।
६६९ ॐ तत्त्वाय नमः।
६७० ॐ तत्त्वविनिश्चयाय नमः।
६७१ ॐ नैकबाहवे नमः।
६७२ ॐ अनन्तात्मने नमः।
६७३ ॐ नैकनामपराक्रमाय नमः।
६७४ ॐ नैकाक्षिणे नमः।
६७५ ॐ नैकपादाय नमः।
६७६ ॐ नाथनाथाय नमः।
६७७ ॐ उत्तमोत्तमाय नमः।
६७८ ॐ सहस्त्रशीर्ष्णे नमः।
६७९ ॐ पुरुषाय नमः।
६८० ॐ सहस्त्राक्षाय नमः।
६८१ ॐ सहस्त्रपदे नमः।

६८२ ॐ सहस्त्ररूपदृशे नमः।
६८३ ॐ सहस्त्रारमयोद्धवाय नमः।
६८४ ॐ त्रिपादपुरुषाय नमः।
६८५ ॐ त्रिपादूर्ध्वाय नमः।
६८६ ॐ त्र्यम्बकाय नमः।
६८७ ॐ महावीर्याय नमः।
६८८ ॐ योगवीर्यविशारदाय नमः।
६८९ ॐ विजयिने नमः।
६९० ॐ विनयिने नमः।
६९१ ॐ जेत्रे नमः।
६९२ ॐ वीतरागिणे नमः।
६९३ ॐ विराजिताय नमः।
६९४ ॐ रुद्राय नमः।
६९५ ॐ रौद्राय नमः।
६९६ ॐ महाभीमाय नमः।
६९७ ॐ प्राज्ञमुख्याय नमः।
६९८ ॐ सदाशुचये नमः।
६९९ ॐ अन्तर्ज्योतिषे नमः।
७०० ॐ अनन्तात्मने नमः।
७०१ ॐ प्रत्यगात्मने नमः।
७०२ ॐ निरन्तराय नमः।
७०३ ॐ अरूपाय नमः।
७०४ ॐ आत्मरूपाय नमः।
७०५ ॐ सर्वभावविनिर्वृताय नमः।
७०६ ॐ अन्तःशून्याय नमः।
७०७ ॐ बहिःशून्याय नमः।
७०८ ॐ शून्यात्मने नमः।
७०९ ॐ शून्यभावनाय नमः।
७१० ॐ अन्तःपूर्णाय नमः।
७११ ॐ बहिःपूर्णाय नमः।
७१२ ॐ पूर्णात्मने नमः।
७१३ ॐ पूर्णभावनाय नमः।
७१४ ॐ अन्तस्त्यागिने नमः।
७१५ ॐ बहिस्त्यागिने नमः।
७१६ ॐ त्यागात्मने नमः।
७१७ ॐ सर्वयोगवते नमः।
७१८ ॐ अन्तर्योगिने नमः।
७१९ ॐ बहिर्योगिने नमः।
७२० ॐ सर्वयोगपरायणाय नमः।
७२१ ॐ अन्तर्भोगिने नमः।
७२२ ॐ बहिर्भोगिने नमः।
७२३ ॐ सर्वभोगविदुत्तमाय नमः।
७२४ ॐ अन्तर्निष्ठाय नमः।
७२५ ॐ बहिर्निष्ठाय नमः।
७२६ ॐ सर्वनिष्ठामयाय नमः।
७२७ ॐ बाह्यान्तरविमुक्ताय नमः।
७२८ ॐ बाह्यान्तरविवर्जिताय नमः।
७२९ ॐ शान्ताय नमः।
७३० ॐ शुद्धाय नमः।
७३१ ॐ विशुद्धाय नमः।
७३२ ॐ निर्वाणाय नमः।
७३३ ॐ प्रकृतेः परस्मै नमः।
७३४ ॐ अकालाय नमः।
७३५ ॐ कालनेमिने नमः।
७३६ ॐ कालकालाय नमः।
७३७ ॐ जनेश्वराय नमः।
७३८ ॐ कालात्मने नमः।
७३९ ॐ कालकर्त्रे नमः।

७४० ॐ कालज्ञाय नमः।
७४१ ॐ कालनाशनाय नमः।
७४२ ॐ कैवल्यपददात्रे नमः।
७४३ ॐ कैवल्यसुखदायकाय नमः।
७४४ ॐ कैवल्यकलनाधाराय नमः।
७४५ ॐ निर्भराय नमः।
७४६ ॐ हर्षवर्धनाय नमः।
७४७ ॐ हृदयस्थाय नमः।
७४८ ॐ हृषीकेशाय नमः।
७४९ ॐ गोविन्दाय नमः।
७५० ॐ गर्भवर्जिताय नमः।
७५१ ॐ सकलागमपूज्याय नमः।
७५२ ॐ निगमाय नमः।
७५३ ॐ निगमाश्रयाय नमः।
७५४ ॐ पराशक्तये नमः।
७५५ ॐ पराकीर्तये नमः।
७५६ ॐ परावृत्तये नमः।
७५७ ॐ निधये नमः।
७५८ ॐ स्मृतये नमः।
७५९ ॐ परविद्याय नमः।
७६० ॐ पराक्षान्तये नमः।
७६१ ॐ विभक्तये नमः।
७६२ ॐ युक्तसद्गतये नमः।
७६३ ॐ स्वप्रकाशाय नमः।
७६४ ॐ प्रकाशात्मने नमः।
७६५ ॐ परसंवेदनात्मकाय नमः।
७६६ ॐ स्वसेव्याय नमः।
७६७ ॐ स्वविदां स्वात्मने नमः।
७६८ ॐ स्वसंवेद्याय नमः।
७६९ ॐ अनघाय नमः।
७७० ॐ क्षमिणे नमः।
७७१ ॐ स्वानुसन्धानशीलात्मने नमः।
७७२ ॐ स्वानुसन्धानगोचराय नमः।
७७३ ॐ स्वानुसन्धानशून्यात्मने नमः।
७७४ ॐ स्वानुसन्धानकाश्रयाय नमः।
७७५ ॐ स्वबोधदर्पणाय नमः।
७७६ ॐ अभङ्गाय नमः।
७७७ ॐ कन्दर्पकुलनाशनाय नमः।
७७८ ॐ ब्रह्मचारिणे नमः।
७७९ ॐ ब्रह्मवेत्त्रे नमः।
७८० ॐ ब्राह्मणाय नमः।
७८१ ॐ ब्रह्मवित्तमाय नमः।
७८२ ॐ तत्त्वबोधाय नमः।
७८३ ॐ सुधावर्षाय नमः।
७८४ ॐ पावनाय नमः।
७८५ ॐ पापपावकाय नमः।
७८६ ॐ ब्रह्मसूत्रविधेयात्मने नमः।
७८७ ॐ ब्रह्मसूत्रार्थनिर्णयाय नमः।
७८८ ॐ आत्यन्तिकाय नमः।
७८९ ॐ महाकल्पाय नमः।
७९० ॐ संकल्पावर्तनाशनाय नमः।
७९१ ॐ आधिव्याधिहराय नमः।
७९२ ॐ संशयार्णवशोषकाय नमः।
७९३ ॐ तत्त्वात्मज्ञानसंदेशाय नमः।
७९४ ॐ महानुभवभाविताय नमः।
७९५ ॐ आत्मानुभवसम्पन्नाय नमः।
७९६ ॐ स्वानुभावसुखाश्रयाय नमः।
७९७ ॐ अचिन्त्याय नमः।

७९८ ॐ बृहद्भानवे नमः।
७९९ ॐ प्रमदोत्कर्षनाशनाय नमः।
८०० ॐ अनिकेताय नमः।
८०१ ॐ प्रशान्तात्मने नमः।
८०२ ॐ शून्यावासाय नमः।
८०३ ॐ जगद्वपुषे नमः।
८०४ ॐ चिद्गतये नमः।
८०५ ॐ चिन्मयाय नमः।
८०६ ॐ चक्रिणे नमः।
८०७ ॐ मायाचक्रप्रवर्तकाय नमः।
८०८ ॐ सर्ववर्णविदारम्भिणे नमः।
८०९ ॐ सर्वारम्भपरायणाय नमः।
८१० ॐ पुराणाय नमः।
८११ ॐ प्रवराय नमः।
८१२ ॐ दात्रे नमः।
८१३ ॐ सुन्दराय नमः।
८१४ ॐ कनकाङ्गदिने नमः।
८१५ ॐ अनसूयात्मजाय नमः।
८१६ ॐ दत्ताय नमः।
८१७ ॐ सर्वज्ञाय नमः।
८१८ ॐ सर्वकामदाय नमः।
८१९ ॐ कामजिते नमः।
८२० ॐ कामपालाय नमः।
८२१ ॐ कामिने नमः।
८२२ ॐ कामप्रदागमाय नमः।
८२३ ॐ कामवते नमः।
८२४ ॐ कामपोषाय नमः।
८२५ ॐ सर्वकामनिवर्तकाय नमः।
८२६ ॐ सर्वकर्मफलोत्पत्तये नमः।
८२७ ॐ सर्वकामफलप्रदाय नमः।
८२८ ॐ सर्वकर्मफलैः पूज्याय नमः।
८२९ ॐ सर्वकर्मफलाश्रयाय नमः।
८३० ॐ विश्वकर्मणे नमः।
८३१ ॐ कृतात्मने नमः।
८३२ ॐ कृतज्ञाय नमः।
८३३ ॐ सर्वसाक्षिकाय नमः।
८३४ ॐ सर्वारम्भपरित्यागिने नमः।
८३५ ॐ जडोन्मत्तपिशाचवते नमः।
८३६ ॐ भिक्षवे नमः।
८३७ ॐ भैक्षाकराय नमः।
८३८ ॐ भैक्षाहारिणे नमः।
८३९ ॐ निराश्रमिणे नमः।
८४० ॐ अकूलाय नमः।
८४१ ॐ अनुकूलाय नमः।
८४२ ॐ विकलाय नमः।
८४३ ॐ अकलाय नमः।
८४४ ॐ जटिलाय नमः।
८४५ ॐ वनचारिणे नमः।
८४६ ॐ दण्डिने नमः।
८४७ ॐ मुण्डिने नमः।
८४८ ॐ गण्डवते नमः।
८४९ ॐ देहधर्मविहीनात्मने नमः।
८५० ॐ एकाकिने नमः।
८५१ ॐ संगवर्जिताय नमः।
८५२ ॐ आश्रमिणे नमः।
८५३ ॐ अनाश्रमारम्भाय नमः।
८५४ ॐ अनाचारिणे नमः।
८५५ ॐ कर्मवर्जिताय नमः।

८५६ ॐ असंदेहिने नमः।
८५७ ॐ संदेहिने नमः।
८५८ ॐ न किंचिन्न च किंचनाय नमः।
८५९ ॐ नृदेहिने नमः।
८६० ॐ देहशून्याय नमः।
८६१ ॐ नाभाविने नमः।
८६२ ॐ भावनिर्गताय नमः।
८६३ ॐ नाब्रह्मणे नमः।
८६४ ॐ परब्रह्मणे नमः।
८६५ ॐ स्वयमेव निराकुलाय नमः।
८६६ ॐ अनघाय नमः।
८६७ ॐ अगुरवे नमः।
८६८ ॐ नाथनाथोत्तमाय नमः।
८६९ ॐ गुरवे नमः।
८७० ॐ द्विभुजाय नमः।
८७१ ॐ प्राकृताय नमः।
८७२ ॐ जनकाय नमः।
८७३ ॐ पितामहाय नमः।
८७४ ॐ अनात्मने नमः।
८७५ ॐ न नानात्मने नमः।
८७६ ॐ नीतये नमः।
८७७ ॐ नीतिमतां वराय नमः।
८७८ ॐ सहजाय नमः।
८७९ ॐ सदृशाय नमः।
८८० ॐ सिद्धाय नमः।
८८१ ॐ एकस्मै नमः।
८८२ ॐ चिन्मात्राय नमः।
८८३ ॐ न कर्त्रे नमः।
८८४ ॐ कर्त्रे नमः।
८८५ ॐ भोक्त्रे नमः।
८८६ ॐ भोगविवर्जिताय नमः।
८८७ ॐ तुरीयाय नमः।
८८८ ॐ तुरीयातीताय नमः।
८८९ ॐ स्वच्छाय नमः।
८९० ॐ सर्वमयाय नमः।
८९१ ॐ सर्वाधिष्ठानरूपाय नमः।
८९२ ॐ सर्वध्येयविवर्जिताय नमः।
८९३ ॐ सर्वलोकनिवासात्मने नमः।
८९४ ॐ सकलोत्तमवन्दिताय नमः।
८९५ ॐ देहभृते नमः।
८९६ ॐ देहकृते नमः।
८९७ ॐ देहात्मने नमः।
८९८ ॐ देहभावनाय नमः।
८९९ ॐ देहिने नमः।
९०० ॐ देहविभक्ताय नमः।
९०१ ॐ देहभावप्रकाशनाय नमः।
९०२ ॐ लयस्थाय नमः।
९०३ ॐ लयविदे नमः।
९०४ ॐ लयाभावाय नमः।
९०५ ॐ बोधवते नमः।
९०६ ॐ लयातीताय नमः।
९०७ ॐ लयस्यान्ताय नमः।
९०८ ॐ लयभावनिवारणाय नमः।
९०९ ॐ विमुखाय नमः।
९१० ॐ प्रमुखाय नमः।
९११ ॐ प्रत्यङ्मुखवदाचरिणे नमः।
९१२ ॐ विश्वभुजे नमः।
९१३ ॐ विश्वधृषे नमः।

११४ ॐ विश्वस्मै नमः।
११५ ॐ विश्वक्षेमकराय नमः।
११६ ॐ अविक्षिप्ताय नमः।
११७ ॐ अप्रमादिने नमः।
११८ ॐ परर्द्धये नमः।
११९ ॐ परमार्थदृशे नमः।
१२० ॐ स्वानुभावविहीनाय नमः।
१२१ ॐ स्वानुभावप्रकाशनाय नमः।
१२२ ॐ निरिन्द्रियाय नमः।
१२३ ॐ निर्बुद्धये नमः।
१२४ ॐ निराभासाय नमः।
१२५ ॐ निराकृताय नमः।
१२६ ॐ निरहंकाराय नमः।
१२७ ॐ रूपात्मने नमः।
१२८ ॐ निर्वपुषे नमः।
१२९ ॐ सकलाश्रयाय नमः।
१३० ॐ शोकदुःखहराय नमः।
१३१ ॐ भोगमोक्षफलप्रदाय नमः।
१३२ ॐ सुप्रसन्नाय नमः।
१३३ ॐ सूक्ष्माय नमः।
१३४ ॐ शब्दब्रह्मार्थसंग्रहाय नमः।
१३५ ॐ आगमापायशून्याय नमः।
१३६ ॐ स्थानदाय नमः।
१३७ ॐ सतां गतये नमः।
१३८ ॐ अकृताय नमः।
१३९ ॐ सुकृताय नमः।
१४० ॐ कृतकर्मविनिर्वृताय नमः।
१४१ ॐ भेदत्रयहराय नमः।
१४२ ॐ देहत्रयविनिर्गताय नमः।
१४३ ॐ सर्वकाममयाय नमः
१४४ ॐ सर्वकामनिवर्तकाय नमः।
१४५ ॐ सिद्धेश्वराय नमः।
१४६ ॐ अजराय नमः।
१४७ ॐ पञ्चबाणदर्पहुताशनाय नमः।
१४८ ॐ चतुरक्षरबीजात्मने नमः।
१४९ ॐ स्वभुवे नमः।
१५० ॐ चित्कीर्तिभूषणाय नमः।
१५१ ॐ अगाधबुद्धये नमः।
१५२ ॐ अक्षुब्धाय नमः।
१५३ ॐ चन्द्रसूर्याग्निलोचनाय नमः।
१५४ ॐ यमदंष्ट्राय नमः।
१५५ ॐ अतिसंहर्त्रे नमः।
१५६ ॐ परमानन्दसागराय नमः।
१५७ ॐ लीलाविश्वम्भराय नमः।
१५८ ॐ भानवे नमः।
१५९ ॐ भैरवाय नमः।
१६० ॐ भीमलोचनाय नमः।
१६१ ॐ ब्रह्मचर्माम्बराय नमः।
१६२ ॐ कालाय नमः।
१६३ ॐ अचलाय नमः।
१६४ ॐ चलनान्तकाय नमः।
१६५ ॐ आदिदेवाय नमः।
१६६ ॐ जगद्योनये नमः।
१६७ ॐ वासवारिविमर्दनाय नमः।
१६८ ॐ विकर्मकर्मकर्मज्ञाय नमः।
१६९ ॐ अनन्यगमकाय नमः।
१७० ॐ अगमाय नमः।
१७१ ॐ अबद्धकर्मशून्याय नमः।

९७२ ॐ कामरागकुलक्षयाय नमः।
९७३ ॐ योगान्धकारमथनाय नमः।
९७४ ॐ पद्मजन्मादिवन्दिताय नमः।
९७५ ॐ भक्तकामाय नमः।
९७६ ॐ अग्रजाय नमः।
९७७ ॐ चक्रिणे नमः।
९७८ ॐ भावनिर्भावभावकाय नमः।
९७९ ॐ भेदान्तकाय नमः।
९८० ॐ महते नमः।
९८१ ॐ अग्र्याय नमः।
९८२ ॐ निगूहाय नमः।
९८३ ॐ गोचरान्तकाय नमः।
९८४ ॐ कालाग्निशमनाय नमः।
९८५ ॐ शंखचक्रपद्मगदाधराय नमः।
९८६ ॐ दीप्ताय नमः।
९८७ ॐ दीनपतये नमः।
९८८ ॐ शास्त्रे नमः।
९८९ ॐ स्वच्छन्दाय नमः।
९९० ॐ मुक्तिदायकाय नमः।
९९१ ॐ व्योमधर्माम्बराय नमः।
९९२ ॐ भेत्त्रे नमः।
९९३ ॐ भस्मधारिणे नमः।
९९४ ॐ धराधराय नमः।
९९५ ॐ धर्मगुप्ताय नमः।
९९६ ॐ अन्वयात्मने नमः।
९९७ ॐ व्यतिरेकार्थनिर्णयाय नमः।
९९८ ॐ एकस्मै नमः।
९९९ ॐ अनेकगुणाभासाभास-निर्भासवर्जिताय नमः।
१००० ॐ भावाभावस्वभावात्मने नमः।
१००१ ॐ भावाभावविभावविदे नमः।
१००२ ॐ योगिहृदयविश्रामाय नमः।
१००३ ॐ अनन्तविद्याविवर्धनाय नमः।
१००४ ॐ विघ्नान्तकाय नमः।
१००५ ॐ त्रिकालज्ञाय नमः।
१००६ ॐ तत्त्वात्मने नमः।
१००७ ॐ ज्ञानसागराय नमः।

॥ इति श्रीमद्दत्तात्रेयपुराणोक्तं श्रीदत्तात्रेयसहस्त्रनामावलिः सम्पूर्णा ॥

॥ श्रीमहागणपतये नमः ॥

# श्रीवक्रतुण्डमहागणपतिसहस्त्रनामस्तोत्रम्

अस्य श्रीवक्रतुण्डमहागणपतिसहस्त्रनामस्तोत्रमन्त्रस्य महागणपतिर्ऋषिः, अनुष्टुप् छन्दः, महागणपतिर्देवता, गं बीजम्, हुं शक्तिः, स्वाहा कीलकम् चतुर्विधपुरुषार्थसिद्ध्यर्थे जपे विनियोगः।

*ध्यानम्*

खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ॥*

*स्तोत्रम्*

*महागणपतिरुवाच*

**ॐ गणेश्वरो गणक्रीडो गणनाथो गणाधिपः।**
**एकदंष्ट्रो वक्रतुण्डो गजवक्त्रो महोदरः॥ १ ॥**
**लम्बोदरो धूम्रवर्णो विकटो विघ्ननायकः।**
**सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः॥ २ ॥**
**भीमः प्रमोद आमोदः सुरानन्दो मदोत्कटः।**
**हेरम्बः शम्बरः शम्भुर्लम्बकर्णो महाबलः॥ ३ ॥**

---

* जो नाटे और मोटे शरीरवाले हैं, जिनका गजराजके समान मुख और लम्बा उदर है,जो सुन्दर हैं तथा बहते हुए मदकी सुगन्धके लोभी भौंरोंके चाटनेसे जिनका गण्डस्थल चपल हो रहा है, दाँतोंकी चोटसे विदीर्ण हुए शत्रुओंके खूनसे जो सिन्दूरकी-सी शोभा धारण करते हैं, कामनाओंके दाता और सिद्धि देनेवाले उन पार्वतीके पुत्र गणेशजीकी मैं वन्दना करता हूँ।

नन्दनोऽलम्पटोऽभीरुर्मेघनादो गणञ्जयः।
विनायको विरूपाक्षो धीरशूरो वरप्रदः॥ ४ ॥
महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः।
रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः॥ ५ ॥
कुमारगुरुरीशानपुत्रो मूषकवाहनः।
सिद्धिप्रियः सिद्धिपतिः सिद्धः सिद्धिविनायकः॥ ६ ॥
अविघ्नस्तुम्बुरुः सिंहवाहनो मोहिनीप्रियः।
कटङ्कटो राजपुत्रः शालकः सम्मितोऽमितः॥ ७ ॥
कूष्माण्डसामसम्भूतिर्दुर्जयो धूर्जयो जयः।
भूपतिर्भुवनपतिर्भूतानां पतिरव्ययः॥ ८ ॥
विश्वकर्ता विश्वमुखो विश्वरूपो निधिर्घृणिः।
कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मणस्पतिः॥ ९ ॥
ज्येष्ठराजो निधिपतिर्निधिप्रियपतिप्रियः।
हिरण्मयपुरान्तःस्थः सूर्यमण्डलमध्यगः॥ १० ॥
कराहतिध्वस्तसिन्धुसलिलः पूषदन्तहृत्।
उमाङ्ककेलिकुतुकी मुक्तिदः कुलपालनः॥ ११ ॥
किरीटी कुण्डली हारी वनमाली मनोमयः।
वैमुख्यहतदैत्यश्रीः पादाहतजितक्षितिः॥ १२ ॥
सद्योजातः स्वर्णमुञ्जमेखली दुर्निमित्तहृत्।
दुःस्वप्नहृत्प्रसहनो गुणी नादप्रतिष्ठितः॥ १३ ॥
सुरूपः सर्वनेत्राधिवासो वीरासनाश्रयः।
पीताम्बरः खण्डरदः खण्डेन्दुकृतशेखरः॥ १४ ॥

चित्राङ्कः श्यामदशनो भालचन्द्रश्चतुर्भुजः।
योगाधिपस्तारकस्थः पुरुषो गजकर्णकः॥ १५॥
गणाधिराजो विजयस्थिरो गजपतिर्ध्वजी।
देवदेवः स्मरप्राणदीपको वायुकीलकः॥ १६॥
विपश्चिद्वरदो नादोन्नादभिन्नबलाहकः।
वाराहरदनो मृत्युञ्जयो व्याघ्राजिनाम्बरः॥ १७॥
इच्छाशक्तिधरो देवत्राता दैत्यविमर्दनः।
शम्भुवक्त्रोद्भवः शम्भुकोपहा शम्भुहास्यभूः॥ १८॥
शम्भुतेजाः शिवाशोकहारी गौरीसुखावहः।
उमाङ्गमलजो गौरीतेजोभूः स्वर्धुनीभवः॥ १९॥
यज्ञकायो महानादो गिरिवर्ष्मा शुभाननः।
सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्धा ककुप्श्रुतिः॥ २०॥
ब्रह्माण्डकुम्भश्चिद्व्योमभालः सत्यशिरोरुहः।
जगज्जन्मलयोन्मेषनिमिषोऽग्न्यर्कसोमदृक्॥ २१॥
गिरीन्द्रैकरदो धर्मो धर्मिष्ठः सामबृंहितः।
ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः॥ २२॥
भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोत्कटः।
कुलाचलांसः सोमार्कघण्टो रुद्रशिरोधरः॥ २३॥
नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः।
व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः॥ २४॥
कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषः।
पृथ्वीकटिः सृष्टिलिङ्गः शैलोरुर्दस्रजानुकः॥ २५॥

पातालजङ्घो मुनिपात्कालाङ्गुष्ठस्त्रयीतनुः ।
ज्योतिर्मण्डललाङ्गूलो हृदयालातनिश्चलः ॥ २६ ॥
हृत्पद्मकर्णिकाशाली वियत्केलिसरोवरः ।
सद्भक्तध्याननिगडः पूजावारिनिवारितः ॥ २७ ॥
प्रतापी कश्यपसुतो गणपो विष्टपी बली ।
यशस्वी धार्मिकः स्वोजाः प्रथमः प्रमथेश्वरः ॥ २८ ॥
चिन्तामणिर्दीपपतिः कल्पद्रुमवनालयः ।
रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ॥ २९ ॥
तीव्राशिरो धृतपदो ज्वालिनीमौलिलालितः ।
नन्दानन्दितपीठश्रीर्भोगदो भूषितासनः ॥ ३० ॥
सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः ।
तेजोवतीशिरोरत्नं सत्यनित्यावतंसितः ॥ ३१ ॥
सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजाश्रयः ।
लिपिपद्मासनाधारो वह्निधाम त्रयाश्रयः ॥ ३२ ॥
उन्नतप्रपदागूढगुल्फसंवृतपार्ष्णिकः ।
पीनजङ्घः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ॥ ३३ ॥
निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः ।
पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः ॥ ३४ ॥
भग्नवामरदस्तुङ्गसव्यदन्तो महाहनुः ।
ह्रस्वनेत्रत्रयः शूर्पकर्णो निविडमस्तकः ॥ ३५ ॥
स्तबकाकारकुम्भाग्रो रत्नमौलिर्निरंकुशः ।
सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ॥ ३६ ॥

सर्पकोटीरकटकः सर्पग्रैवेयकाङ्गदः।
सर्पकक्ष्योदराबन्धः सर्पराजोत्तरीयकः॥ ३७॥
रक्तो रक्ताम्बरधरो रक्तमाल्यविभूषणः।
रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः॥ ३८॥
श्वेतः श्वेताम्बरधरः श्वेतमाल्यविभूषणः।
श्वेतातपत्ररुचिरः श्वेतचामरवीजितः॥ ३९॥
सर्वावयवसम्पूर्णः सर्वलक्षणलक्षितः।
सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः॥ ४०॥
सर्वमङ्गलमाङ्गल्यः सर्वकारणकारणम्।
सर्वदैककरः शार्ङ्गी बीजापूरी गदाधरः॥ ४१॥
इक्षुचापधरः शूली चक्रपाणिः सरोजभृत्।
पाशी धृतोत्पलः शालिमञ्जरीभृत्स्वदन्तभृत्॥ ४२॥
कल्पवल्लीधरो विश्वाभयदैककरो वशी।
अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः॥ ४३॥
पूर्णपात्री कम्बुधरो विधृतालिसमूहकः।
मातुलुङ्गधरश्चूतकलिकाभृत्कुठारवान् ॥ ४४॥
पुष्करस्थः स्वर्णघटीपूर्णरत्नाभिवर्षकः ।
भारतीसुन्दरीनाथो विनायकरतिप्रियः॥ ४५॥
महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः।
रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः॥ ४६॥
महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः।
आमोदमोदजननः सप्रमोदः प्रमोदनः॥ ४७॥

सामैधिता समिद्धश्रीर्ऋद्धिसिद्धिप्रवर्तकः।
दत्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ॥ ४८ ॥
मदनावत्याश्रिताङ्घ्रिः कृतदौर्मुख्यदुर्मुखः।
विघ्नसम्पल्लवोपघ्नः सेवोन्निद्रमदद्रवः ॥ ४९ ॥
विघ्नकृन्निघ्नचरणो द्राविणीशक्तिसत्कृतः।
तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक् ॥ ५० ॥
मोहिनीमोहनो भोगदायिनीकान्तिमण्डितः।
कामिनीकान्तवक्त्रश्रीरधिष्ठितवसुन्धरः ॥ ५१ ॥
वसुन्धरामदोन्नद्धो महाशङ्खनिधिः प्रभुः।
नमद्वसुमतीमौलिर्महापद्मनिधिप्रभुः ॥ ५२ ॥
सर्वसद्गुणसंसेव्यः शोचिष्केशहृदाश्रयः।
ईशानमूर्द्धा देवेन्द्रशिखः पवननन्दनः ॥ ५३ ॥
अग्रप्रत्यग्रनयनो दिव्यास्त्राणां प्रयोगवित्।
ऐरावतादिसर्वाशावारणावरणप्रियः ॥ ५४ ॥
वज्राद्यस्त्रपरीवारो गणचण्डसमाश्रयः।
जयाजयपरीवारो विजयाविजयावहः ॥ ५५ ॥
अजिताजितपादाब्जो नित्यानित्यावतंसितः।
विलासिनीकृतोल्लासः शौण्डिसौन्दर्यमण्डितः ॥ ५६ ॥
अनन्तानन्तसुखदः सुमङ्गलसुमङ्गलः।
इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ॥ ५७ ॥
सुभगासंश्रितपदो ललिताललिताश्रयः।
कामिनीकामनः काममालिनीकेलिलालितः ॥ ५८ ॥

सरस्वत्याश्रयो गौरीनन्दनः श्रीनिकेतनः ।
गुरुगुप्तपदो वाचा सिद्धो वागीश्वरीपतिः ॥ ५९ ॥
नलिनीकामुको वामारामो ज्येष्ठामनोरमः ।
रौद्रीमुद्रितपादाब्जो हुंबीजस्तुङ्गशक्तिकः ॥ ६० ॥
विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः ।
अमृताब्धिकृतावासो मदघूर्णितलोचनः ॥ ६१ ॥
उच्छिष्टगण उच्छिष्टगणेशो गणनायकः ।
सर्वकालिकसंसिद्धिर्नित्यशैवो दिगम्बरः ॥ ६२ ॥
अनपायोऽनन्तदृष्टिरप्रमेयोऽजरामरः ।
अनाविलोऽप्रतिरथो ह्यच्युतोऽमृतमक्षरम् ॥ ६३ ॥
अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः ।
अमोघसिद्धिरद्वैतमघोरोऽप्रमितानन: ॥ ६४ ॥
अनाकारोऽधिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः ।
आधारपीठ आधार आधाराधेयवर्जितः ॥ ६५ ॥
आखुकेतन आशापूरक आखुमहारथः ।
इक्षुसागरमध्यस्थ इक्षुभक्षणलालसः ॥ ६६ ॥
इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः ।
इन्द्रगोपसमानश्रीरिन्द्रनीलसमद्युतिः ॥ ६७ ॥
इन्दीवरदलश्याम इन्दुमण्डलनिर्मलः ।
इध्मप्रिय इडाभाग इडाधामेन्दिराप्रियः ॥ ६८ ॥
इक्ष्वाकुविघ्नविध्वंसी इतिकर्तव्यतेप्सितः ।
ईशानमौलिरीशान ईशानसुत ईतिहा ॥ ६९ ॥

ईषणात्रयकल्पान्त ईहामात्रविवर्जितः।
उपेन्द्र उडुभृन्मौलिरुण्डेरकबलिप्रियः॥ ७०॥
उन्नतानन उत्तुङ्ग उदारत्रिदशाग्रणीः।
ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः॥ ७१॥
ऋग्यजुःसामसम्भूतिर्ऋद्धिसिद्धिप्रवर्तकः।
ऋजुचित्तैकसुलभ ऋणत्रयविमोचकः॥ ७२॥
लुप्तविघ्नः स्वभक्तानां लुप्तशक्तिः सुरद्विषाम्।
लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः॥ ७३॥
एकारपीठमध्यस्थ एकपादकृतासनः।
एजिताखिलदैत्यश्रीरेजिताखिलसंश्रयः॥ ७४॥
ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः।
ऐरम्मदसमोन्मेष ऐरावतनिभाननः॥ ७५॥
ओंकारवाच्य ओंकार ओजस्वानोषधिपतिः।
औदार्यनिधिरौद्धत्यधुर्य औन्नत्यनिःस्वनः॥ ७६॥
अङ्कुशः सुरनागानामङ्कुशः सुरविद्विषाम्।
असमस्तविसर्गाणां पदेषु परिकीर्तितः॥ ७७॥
कमण्डलुधरः कल्पः कपर्दी कलभाननः।
कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः॥ ७८॥
कदम्बगोलकाकारः कूष्माण्डगणनायकः।
कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत्॥ ७९॥
खर्वः खड्गप्रियः खड्गखातान्तःस्थः खनिर्मलः।
खल्वाटशृङ्गनिलयः खट्वाङ्गी खदुरासदः॥ ८०॥

५६६

गुणाढ्यो गहनो गस्थो गद्यपद्यसुधार्णवः।
गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः॥ ८१॥
गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः।
गुहाशयो गुहाब्धिस्थो गुरुगम्यो गुरोर्गुरुः॥ ८२॥
घण्टाघर्घरिकामाली घटकुम्भो घटोदरः।
चण्डश्चण्डेश्वरसुहृच्चण्डेशश्चण्डविक्रमः॥ ८३॥
चराचरपतिश्चिन्तामणिश्चर्वणलालसः।
छन्दश्छन्दोवपुश्छन्दोदुर्लक्ष्यश्छन्दविग्रहः॥ ८४॥
जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः।
जपो जपपरो जप्यो जिह्वासिंहासनप्रभुः॥ ८५॥
झलज्झल्लोल्लसद्दानझङ्कारिभ्रमराकुलः।
टङ्कारस्फारसंरावष्टङ्कारिमणिनूपुरः॥ ८६॥
ठद्वयी पल्लवान्तःस्थः सर्वमन्त्रैकसिद्धिदः।
डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः॥ ८७॥
ढक्कानिनादमुदितो ढौङ्को ढुण्ढिविनायकः।
तत्त्वानां परमं तत्त्वं तत्त्वम्पदनिरूपितः॥ ८८॥
तारकान्तरसंस्थानस्तारकस्तारकान्तकः।
स्थाणुः स्थाणुप्रियः स्थाता स्थावरञ्जङ्गमं जगत्॥ ८९॥
दक्षयज्ञप्रमथनो दाता दानवमोहनः।
दयावान् दिव्यविभवो दण्डभृद्दण्डनायकः॥ ९०॥
दन्तप्रभिन्नाभ्रमालो दैत्यवारणदारणः।
दंष्ट्रालग्नद्विपघटो देवार्थनृगजाकृतिः॥ ९१॥

धनधान्यपतिर्धन्यो धनदो धरणीधरः।
ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः॥ ९२ ॥
नन्द्यो नन्दिप्रियो नादो नादमध्यप्रतिष्ठितः।
निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः॥ ९३ ॥
परं व्योम परं धाम परमात्मा परं पदम्।
परात्परः पशुपतिः पशुपाशविमोचकः॥ ९४ ॥
पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः।
पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः॥ ९५ ॥
प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः।
फलहस्तः फणिपतिः फेत्कारः फाणितप्रियः॥ ९६ ॥
बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली।
ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः॥ ९७ ॥
बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः।
बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः॥ ९८ ॥
भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः।
भगवान् भक्तिसुलभो भूतिदो भूतिभूषणः॥ ९९ ॥
भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः।
मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तो मनोरमः॥ १०० ॥
मेखलावान् मन्दगतिर्मतिमान् कमलेक्षणः।
महाबलो महावीर्यो महाप्राणो महामनाः॥ १०१ ॥
यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः।
यशस्करो योगगम्यो याज्ञिको याजकप्रियः॥ १०२ ॥

रसो रसप्रियो रस्यो रञ्जको रावणार्चितः।
रक्षोरक्षाकरो रत्नगर्भो राज्यसुखप्रदः॥ १०३॥
लक्ष्यालक्ष्यप्रदो लक्ष्यो लयस्थो लड्डुकप्रियः।
लानप्रियो लास्यपरो लाभकृल्लोकविश्रुतः॥ १०४॥
वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः।
विकर्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः॥ १०५॥
वामदेवो विश्वनेता वज्री वज्रनिवारणः।
विश्वबन्धनविष्कम्भाधारो विश्वेश्वरप्रभुः॥ १०६॥
शब्दब्रह्म शमप्राप्यः शम्भुशक्तिगणेश्वरः।
शास्ता शिखाग्रनिलयः शरण्यः शिखरीश्वरः॥ १०७॥
षड्ऋतुकुसुमस्रग्वी षडाधारः षडक्षरः।
संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम्॥ १०८॥
सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदनः।
सिन्दूरितमहाकुम्भः सदसद्व्यक्तिदायकः॥ १०९॥
साक्षी समुद्रमथनः स्वसंवेद्यः स्वदक्षिणः।
स्वतन्त्रः सत्यसंकल्पः सामगानरतः सुखी॥ ११०॥
हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक्।
हव्यं हुतप्रियो हर्षो हृल्लेखामन्त्रमध्यगः॥ १११॥
क्षेत्राधिपः क्षमाभर्ता क्षमापरपरायणः।
क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः॥ ११२॥
धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः।
विद्याप्रदो विभवदो भुक्तिमुक्तिप्रदायकः॥ ११३॥

आभिरूप्यकरो वीरः श्रीप्रदो विजयप्रदः।
सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः॥ ११४॥
मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः।
श्रीशोकहारी दौर्भाग्यनाशनः सर्वशक्तिभृत्॥ ११५॥
प्रतिवादिमुखस्तम्भो हृष्टचित्तप्रसादनः।
पराभिचारशमनो दुःखभञ्जनकारकः॥ ११६॥
लवस्त्रुटिः कला काष्ठा निमेषस्तत्परः क्षणः।
घटी मुहूर्तः प्रहरो दिवानक्तमहर्निशम्॥ ११७॥
पक्षो मासोऽयनं वर्षं युगं कल्पो महालयः।
राशिस्तारा तिथिर्योगो वारः करणमंशकम्॥ ११८॥
लग्नं होरा कालचक्रं मेरुः सप्तर्षयो ध्रुवः।
राहुर्मन्दः कविर्जीवो बुधो भौमः शशी रविः॥ ११९॥
कालः सृष्टिः स्थितिर्विश्वं स्थावरं जङ्गमं च यत्।
भूरापोऽग्निर्मरुद् व्योमाहंकृतिः प्रकृतिः पुमान्॥ १२०॥
ब्रह्मा विष्णुः शिवो रुद्र ईशः शक्तिः सदाशिवः।
त्रिदशाः पितरः सिद्धा यक्षरक्षांसि किन्नराः॥ १२१॥
साध्या विद्याधरा भूता मनुष्याः पशवः खगाः।
समुद्राः सरितः शैला भूतभव्यभवोद्भवः॥ १२२॥
सांख्यं पातञ्जलं योगं पुराणानि श्रुतिः स्मृतिः।
वेदाङ्गानि सदाचारो मीमांसा न्यायविस्तरः॥ १२३॥
आयुर्वेदो धनुर्वेदो गान्धर्वं काव्यनाटकम्।
वैखानसं भागवतं सात्वतं पाञ्चरात्रकम्॥ १२४॥

शैवं पाशुपतं कालमुखं भैरवशासनम्।
शाक्तं वैनायकं सौरं जैनमार्हतसंहिता॥ १२५॥
सदसद् व्यक्तमव्यक्तं सचेतनमचेतनम्।
बन्धो मोक्षः सुखं भोगो योगः सत्यमणुर्महान्॥ १२६॥
स्वस्ति हुं फट् स्वधा स्वाहा श्रौषड् वौषड् वषण्नमः।
ज्ञानविज्ञानमानन्दो बोधः संविच्छमो यमः॥ १२७॥
एक एकाक्षराधार एकाक्षरपरायणः।
एकाग्रधीरैकवीर एकानेकस्वरूपधृक्॥ १२८॥
द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्वीपरक्षकः।
द्वैमातुरो द्विवदनो द्वन्द्वातीतो द्वयातिगः॥ १२९॥
त्रिधामा त्रिकरस्त्रेता त्रिवर्गफलदायकः।
त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः॥ १३०॥
चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्मुखः।
चतुर्विधोपायमयश्चतुर्वर्णाश्रमाश्रयः॥ १३१॥
चतुर्विधवचो वृत्तिपरिवर्तप्रवर्तकः।
चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसम्भवः॥ १३२॥
पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्यकृत्।
पञ्चाधारः पञ्चवर्णः पञ्चाक्षरपरायणः॥ १३३॥
पञ्चतालः पञ्चकरः पञ्चप्रणवभावितः।
पञ्चब्रह्ममयस्फूर्तिः पञ्चवारणवारितः॥ १३४॥
पञ्चभक्ष्यप्रियः पञ्चबाणः पञ्चशिवात्मकः।
षट्कोणपीठः षट्चक्रधामा षड्ग्रन्थिभेदकः॥ १३५॥
षडध्वध्वान्तविध्वंसी षडङ्गुलमहाह्रदः।
षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः॥ १३६॥

षड्वैरिवर्गविध्वंसी षडूर्मिभयभञ्जनः।
षट्तर्कदूरः षट्कर्मनिरतः षड्रसाश्रयः॥ १३७॥
सप्तपातालचरणः सप्तद्वीपोरुमण्डलः।
सप्तस्वर्लोकमुकुटः सप्तसप्तिवरप्रदः॥ १३८॥
सप्ताङ्गराज्यसुखदः सप्तर्षिगणमण्डितः।
सप्तच्छन्दोनिधिः सप्तहोता सप्तस्वराश्रयः॥ १३९॥
सप्ताब्धिकेलिकासारः सप्तमातृनिषेवितः।
सप्तच्छन्दोमोदमदः सप्तच्छन्दो मखप्रभुः॥ १४०॥
अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम्।
अष्टाङ्गयोगफलभूरष्टपात्राम्बुजासनः॥ १४१॥
अष्टशक्तिसमृद्धिश्रीरष्टैश्वर्यप्रदायकः।
अष्टपीठोपपीठश्रीरष्टमातृसमावृतः॥ १४२॥
अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत्।
अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविःप्रियः॥ १४३॥
नवनागासनाध्यासी नवविध्यनुशासिता।
नवद्वारपुराधारो नवद्वारनिकेतनः॥ १४४॥
नवनारायणस्तुत्यो नवदुर्गानिषेवितः।
नवनाथमहानाथो नवनागविभूषणः॥ १४५॥
नवरत्नविचित्राङ्गो नवशक्तिशिरोधृतः।
दशात्मको दशभुजो दशदिक्पतिवन्दितः॥ १४६॥
दशाध्यायो दशप्राणो दशेन्द्रियनियामकः।
दशाक्षरमहामन्त्रो दशाशा-व्याधिविग्रहः॥ १४७॥
एकादशादिभिः रुद्रैः स्तुत एकादशाक्षरः।
द्वादशोद्दण्डदोर्दण्डो द्वादशान्तनिकेतनः॥ १४८॥

त्रयोदशभिदाभिन्नविश्वेदेवाधिदैवतम् ।
चतुर्दशेन्द्रवरदश्चतुर्दशमनुप्रभुः ॥ १४९ ॥
चतुर्दशादिविद्याढ्यश्चतुर्दशजगत्प्रभुः ।
सामपञ्चदशः पञ्चदशीशीतांशुनिर्मलः ॥ १५० ॥
षोडशाधारनिलयः षोडशस्वरमातृकः ।
षोडशान्तपदावासः षोडशेन्दुकलात्मकः ॥ १५१ ॥
कलासप्तदशी सप्तदशः सप्तदशाक्षरः ।
अष्टादशद्वीपपतिरष्टादशपुराणकृत् ॥ १५२ ॥
अष्टादशौषधीसृष्टिरष्टादशविधिस्मृतः ।
अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ॥ १५३ ॥ 961
एकविंशः पुमानेकविंशत्यङ्गुलिपल्लवः ।
चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः ॥ १५४ ॥
सप्तविंशतितारेशः सप्तविंशतियोगकृत् ।
द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः ॥ १५५ ॥
षट्त्रिंशत्तत्त्वसम्भूतिरष्टत्रिंशत्कलातनुः ।
नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलः ॥ १५६ ॥
पञ्चाशदक्षरश्रेणिः पञ्चाशद्रुद्रविग्रहः ।
पञ्चाशद्विष्णुशक्तीशः पञ्चाशन्मातृकालयः ॥ १५७ ॥
द्विपञ्चाशद्वपुःश्रेणिस्त्रिषष्ट्यक्षरसंश्रयः ।
चतुष्षष्ट्यर्णनिर्णेता चतुःषष्टिकलानिधिः ॥ १५८ ॥
चतुष्षष्टिमहासिद्धयोगिनीवृन्दवन्दितः ।
अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनः ॥ १५९ ॥

चतुर्नवतिमन्त्रात्मा षण्णवत्यधिकप्रभुः।
शतानन्दः शतधृतिः शतपत्रायतेक्षणः॥ १६०॥
शतानीकः शतमखः शतधारवरायुधः।
सहस्त्रपत्रनिलयः सहस्त्रफणभूषणः॥ १६१॥
सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।
सहस्त्रनामसंस्तुत्यः सहस्त्राक्षबलापहः॥ १६२॥
दशसाहस्त्रफणिभृत् फणिराजकृतासनः।
अष्टाशीतिसहस्त्रौघमहर्षिस्तोत्रयन्त्रितः॥ १६३॥
लक्षाधीशप्रियाधारो लक्षाधीशमनोमयः।
चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशितः॥ १६४॥
चतुरशीतिलक्षाणां जीवानां देहसंस्थितः।
कोटिसूर्यप्रतीकाशः कोटिचन्द्रांशुनिर्मलः॥ १६५॥
शिवाभवाध्युष्टकोटिविनायकधुरन्धरः।
सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतिः॥ १६६॥
त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः।
अनन्तदेवतासेव्यो ह्यनन्तमुनिसंस्तुतः॥ १६७॥
अनन्तनामानन्तश्रीरनन्तानन्तसौख्यदः।

*फलश्रुतिः*

इति वैनायकं नाम्नां सहस्त्रमिदमीरितम्॥ १६८॥
इदं ब्राह्मे मुहूर्ते वै यः पठेत् प्रत्यहं नरः।
करस्थं तस्य सकलमैहिकामुष्मिकं सुखम्॥ १६९॥

आयुरारोग्यमैश्वर्यं धर्मः शौर्यं बलं यशः।
मेधा प्रज्ञा धृतिः कान्तिः सौभाग्यमतिरूपता॥ १७०॥
सत्यं दया क्षमा शान्तिर्दाक्षिण्यं धर्मशीलता।
जगत्संयमनं विश्वसंवादो वादपाटवम्॥ १७१॥
सभापाण्डित्यमौदार्यं गाम्भीर्यं ब्रह्मवर्चसम्।
औन्नत्यं च कुलं शीलं प्रतापो वीर्यमार्यता॥ १७२॥
ज्ञानं विज्ञानमास्तिक्यं धैर्यं विश्वातिशायिता।
धनधान्यादिवृद्धिश्च सकृदस्य जपाद्भवेत्॥ १७३॥
वश्यं चतुर्विधं नृणां जपादस्य प्रजायते।
राज्ञो राजकलत्रस्य राजपुत्रस्य मन्त्रिणः॥ १७४॥
जप्यते यस्य वश्यार्थे स दासस्तस्य जायते।
धर्मार्थकाममोक्षाणामनायासेन साधनम्॥ १७५॥
शाकिनीडाकिनीरक्षोयक्षोरगभयापहम्।
साम्राज्यसुखदं चैव समस्तरिपुमर्दनम्॥ १७६॥
समस्तकलहध्वंसि दग्धबीजप्ररोहणम्।
दुःस्वप्नशमनं क्रुद्धस्वामिचित्तप्रसादनम्॥ १७७॥
षट्कर्माष्टमहासिद्धित्रिकालज्ञानसाधनम्।
परकृत्योपशमनं परचक्रविमर्दनम्॥ १७८॥
संग्रामरङ्गे सर्वेषामिदमेकं जयावहम्।
एवं वन्ध्यात्वदोषघ्नं गर्भरक्षैककारणम्॥ १७९॥
पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम्।
देशे तत्र न दुर्भिक्षमीतयो दुरितानि च॥ १८०॥

न तद्गेहं जहाति श्रीर्यत्रायं जप्यते स्तवः।
क्षयकुष्ठप्रमेहार्शो भगन्दरविषूचिकाः॥ १८१॥
गुल्मं प्लीहानमाध्मानमतिसारं महोदरम्।
कासं श्वासमुदावर्तं शूलं शोकारिसम्भवम्॥ १८२॥
शिरोरोगं वमिं हिक्कां गण्डमालामरोचकम्।
वातपित्तकफद्वन्द्वत्रिदोषजनितज्वरम् ॥ १८३॥
आगन्तुविषमं शीतमुष्णं चैकाहिकादिकम्।
इत्याद्युक्तमनुक्तं वा रोगं दोषादिसम्भवम्॥ १८४॥
सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्जपात्।
सकृत् पाठेन संसिद्धिः स्त्रीशूद्रपतितैरपि॥ १८५॥
सहस्त्रनाममन्त्रोऽयं जप्तव्यस्तु शुभाप्तये।
महागणपतेः स्तोत्रं सकामः प्रजपन्निदम्॥ १८६॥
इच्छया सकलान् भोगानुपभुज्येह पार्थिवान्।
मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ॥ १८७॥
चन्द्रेन्द्रभास्करोपेन्द्रब्रह्मरुद्रादिसद्मसु ।
कामरूपः कामगतिः कामतो विचरन्निह॥ १८८॥
भुक्त्वा यथेप्सितान् भोगानभीष्टैः सह बन्धुभिः।
गणेशानुचरो भूत्वा महागणपतेः प्रियः॥ १८९॥
नन्दीश्वरादिसानन्दी नन्दितः सकलैर्गणैः।
शिवाभ्यां कृपया पुत्रनिर्विशेषं च लालितः॥ १९०॥
शिवभक्तः पूर्णकामो गणेश्वरवरात्पुनः।
जातिस्मरो धर्मपरः सार्वभौमोऽभिजायते॥ १९१॥

निष्कामस्तु जपन्नित्यं भक्त्या विघ्नेशतत्परः।
योगसिद्धिं परां प्राप्य ज्ञानवैराग्यसंस्थितः॥ १९२॥
निरन्तरोदितानन्दे वरमानन्दसंविदि।
विश्वोत्तीर्णे परे वारे पुनरावृत्तिवर्जिते॥ १९३॥
लीनो वैनायके धाम्नि रमते नित्यनिर्वृतः।
यो नामभिर्हुतेदेतैरर्चयेत्पूजयेन्नरः॥ १९४॥
राजानो वश्यतां यान्ति रिपवो यान्ति दासताम्।
मन्त्राः सिध्यन्ति सर्वेऽपि सुलभास्तस्य सिद्धयः॥ १९५॥
मूलमन्त्रादपि स्तोत्रमिदं प्रियतरं मम।
नभस्ये मासि शुक्लायां चतुर्थ्यां मम जन्मनि॥ १९६॥
दूर्वाभिर्नामभिः पूजां तर्पणं विधिवच्चरेत्।
अष्टद्रव्यैर्विशेषेण जुहुयाद्भक्तिसंयुतः॥ १९७॥
तस्येप्सितानि सर्वाणि सिध्यन्त्यत्र न संशयः।
इदं प्रजप्तं पठितं पाठितं श्रावितं श्रुतम्॥ १९८॥
व्याकृतं चर्चितं ध्यातं विमृष्टमभिनन्दितम्।
इहामुत्र च सर्वेषां विश्वैश्वर्यप्रदायकम्॥ १९९॥
स्वच्छन्दचारिणाप्येष येन संधार्यते स्तवः।
संरक्ष्यते शिवोद्भूतैर्गणैरध्युष्टकोटिभिः॥ २००॥
पुस्तके लिखितं स्तोत्रं मन्त्रभूतं प्रपूजयेत्।
तत्र सर्वोत्तमा लक्ष्मीः संनिधत्ते निरन्तरम्॥ २०१॥

दानैरशेषैरखिलैर्व्रतैश्च तीर्थैरशेषैः सकलैर्मखैश्च।
न तत्फलं विन्दति यद्गणेशसहस्रनाम्नां स्मरणेन सद्यः ॥ २०२ ॥
एतन्नाम्नां सहस्रं पठति दिनमणौ प्रत्यहं प्रोज्जिहाने
सायं मध्यन्दिने वा त्रिषवणमथवा संततं वा जनो यः।
स स्यादैश्वर्यधुर्यः प्रभवति वचसां कीर्तिमुच्चैस्तनोति
प्रत्यूहं हन्ति विश्वं वशयति सुचिरं वर्धते पुत्रपौत्रैः ॥ २०३ ॥
अकिञ्चनोऽप्येकचित्तो नियतो नियतासनः।
जपेत्तु चतुरो मासान् गणेशार्चनतत्परः ॥ २०४ ॥
दरिद्रतां समुन्मूल्य सप्तजन्मानुगामपि।
लभते महतीं लक्ष्मीमित्याज्ञा पारमेश्वरी ॥ २०५ ॥
आयुष्यं वीतरोगं कुलमतिविमलं सम्पदश्चार्तदानाः
कीर्तिर्नित्यावदाता भणितिरभिनवा कान्तिरव्याजभव्या।
पुत्राः सन्तः कलत्रं गुणवदभिमतं यद्यदेतच्च सत्यं
नित्यं यः स्तोत्रमेतत् पठति गणपतेस्तस्य हस्ते समस्तम् ॥ २०६ ॥
ॐ गणंजयो गणपतिर्हेरम्बो धरणीधरः।
महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ॥ २०७ ॥
अमोघसिद्धिरमृतो मन्त्रश्चिन्तामणिर्निधिः।
सुमङ्गलो बीजमाशापूरको वरदः शिवः ॥ २०८ ॥
काश्यपो नन्दनो वाचा सिद्धो ढुण्ढिविनायकः।
मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान् ॥ २०९ ॥

यः स्तौति मद्गतमना ममाराधनतत्परः।
स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः॥ २१०॥

नमो नमः सुरवरपूजिताङ्घ्रये
नमो नमो निरुपममङ्गलात्मने।
नमो नमो विपुलकरैकसिद्धये
नमो नमः करिकलभाननाय ते॥ २११॥

किङ्किणिगणरणितस्तव चरणः
प्रकटितगुरुमतिचरितविशेषः।
मदजललहरीकलितकपोलः
शमयतु दुरितं गणपतिदेवः॥ २१२॥

*॥ इति शाक्तप्रमोदान्तर्गतगणेशतन्त्रात् उद्धृतं श्रीवक्रतुण्ड-महागणपतिसहस्रनामस्तोत्रं सम्पूर्णम्॥*



॥ श्रीमहागणपतये नमः ॥

# श्रीवक्रतुण्डमहागणपतिसहस्रनामावलिः

१ ॐ गणेश्वराय नमः ।
२ ॐ गणक्रीडाय नमः ।
३ ॐ गणनाथाय नमः ।
४ ॐ गणाधिपाय नमः ।
५ ॐ एकदंष्ट्राय नमः ।
६ ॐ वक्रतुण्डाय नमः ।
७ ॐ गजवक्त्राय नमः ।
८ ॐ महोदराय नमः ।
९ ॐ लम्बोदराय नमः ।
१० ॐ धूम्रवर्णाय नमः ।
११ ॐ विकटाय नमः ।
१२ ॐ विघ्ननायकाय नमः ।
१३ ॐ सुमुखाय नमः ।
१४ ॐ दुर्मुखाय नमः ।
१५ ॐ बुद्धाय नमः ।
१६ ॐ विघ्नराजाय नमः ।
१७ ॐ गजाननाय नमः ।
१८ ॐ भीमाय नमः ।
१९ ॐ प्रमोदाय नमः ।
२० ॐ आमोदाय नमः ।
२१ ॐ सुरानन्दाय नमः ।
२२ ॐ मदोत्कटाय नमः ।
२३ ॐ हेरम्बाय नमः ।
२४ ॐ शम्बराय नमः ।
२५ ॐ शम्भवे नमः ।
२६ ॐ लम्बकर्णाय नमः ।
२७ ॐ महाबलाय नमः ।
२८ ॐ नन्दनाय नमः ।
२९ ॐ अलम्पटाय नमः ।
३० ॐ अभीरवे नमः ।
३१ ॐ मेघनादाय नमः ।
३२ ॐ गणञ्जयाय नमः ।
३३ ॐ विनायकाय नमः ।
३४ ॐ विरूपाक्षाय नमः ।
३५ ॐ धीरशूराय नमः ।
३६ ॐ वरप्रदाय नमः ।
३७ ॐ महागणपतये नमः ।
३८ ॐ बुद्धिप्रियाय नमः ।
३९ ॐ क्षिप्रप्रसादनाय नमः ।
४० ॐ रुद्रप्रियाय नमः ।
४१ ॐ गणाध्यक्षाय नमः ।
४२ ॐ उमापुत्राय नमः ।
४३ ॐ अघनाशनाय नमः ।
४४ ॐ कुमारगुरवे नमः ।
४५ ॐ ईशानपुत्राय नमः ।
४६ ॐ मूषकवाहनाय नमः ।

४७ ॐ सिद्धिप्रियाय नमः।
४८ ॐ सिद्धिपतये नमः।
४९ ॐ सिद्धाय नमः।
५० ॐ सिद्धिविनायकाय नमः।
५१ ॐ अविघ्नाय नमः।
५२ ॐ तुम्बुरवे नमः।
५३ ॐ सिंहवाहनाय नमः।
५४ ॐ मोहिनीप्रियाय नमः।
५५ ॐ कटङ्कटाय नमः।
५६ ॐ राजपुत्राय नमः।
५७ ॐ शालकाय नमः।
५८ ॐ सम्मिताय नमः।
५९ ॐ अमिताय नमः।
६० ॐ कूष्माण्डसामसम्भूतये नमः।
६१ ॐ दुर्जयाय नमः।
६२ ॐ धूर्जयाय नमः।
६३ ॐ जयाय नमः।
६४ ॐ भूपतये नमः।
६५ ॐ भुवनपतये नमः।
६६ ॐ भूतानां पतये नमः।
६७ ॐ अव्ययाय नमः।
६८ ॐ विश्वकर्त्रे नमः।
६९ ॐ विश्वमुखाय नमः।
७० ॐ विश्वरूपाय नमः।
७१ ॐ निधये नमः।
७२ ॐ घृणये नमः।
७३ ॐ कवये नमः।
७४ ॐ कवीनामृषभाय नमः।
७५ ॐ ब्रह्मण्याय नमः।
७६ ॐ ब्रह्मणस्पतये नमः।
७७ ॐ ज्येष्ठराजाय नमः।
७८ ॐ निधिपतये नमः।
७९ ॐ निधिप्रियपतिप्रियाय नमः।
८० ॐ हिरण्मयपुरान्तःस्थाय नमः।
८१ ॐ सूर्यमण्डलमध्यगाय नमः।
८२ ॐ कराहतिध्वस्तसिन्धुसलिलाय नमः।
८३ ॐ पूषदन्तहृते नमः।
८४ ॐ उमाङ्ककेलिकुतुकिने नमः।
८५ ॐ मुक्तिदाय नमः।
८६ ॐ कुलपालनाय नमः।
८७ ॐ किरीटिने नमः।
८८ ॐ कुण्डलिने नमः।
८९ ॐ हारिणे नमः।
९० ॐ वनमालिने नमः।
९१ ॐ मनोमयाय नमः।
९२ ॐ वैमुख्यहतदैत्यश्रिये नमः।
९३ ॐ पादाहतजितक्षितये नमः।
९४ ॐ सद्योजातस्वर्णमुञ्जमेखलिने नमः।
९५ ॐ दुर्निमित्तहृते नमः।
९६ ॐ दुःस्वप्नहृते नमः।
९७ ॐ प्रसहनाय नमः।
९८ ॐ गुणिने नमः।
९९ ॐ नादप्रतिष्ठिताय नमः।
१०० ॐ सुरूपाय नमः।
१०१ ॐ सर्वनेत्राधिवासाय नमः।
१०२ ॐ वीरासनाश्रयाय नमः।

१०३ ॐ पीताम्बराय नमः।
१०४ ॐ खण्डरदाय नमः।
१०५ ॐ खण्डेन्दुकृतशेखराय नमः।
१०६ ॐ चित्राङ्कश्यामदशनाय नमः।
१०७ ॐ भालचन्द्राय नमः।
१०८ ॐ चतुर्भुजाय नमः।
१०९ ॐ योगाधिपाय नमः।
११० ॐ तारकस्थाय नमः।
१११ ॐ पुरुषाय नमः।
११२ ॐ गजकर्णकाय नमः।
११३ ॐ गणाधिराजाय नमः।
११४ ॐ विजयस्थिराय नमः।
११५ ॐ गजपतये नमः।
११६ ॐ ध्वजिने नमः।
११७ ॐ देवदेवाय नमः।
११८ ॐ स्मरप्राणदीपकाय नमः।
११९ ॐ वायुकीलकाय नमः।
१२० ॐ विपश्चिद्वरदाय नमः।
१२१ ॐ नादोन्नादभिन्नबलाहकाय नमः।
१२२ ॐ वाराहरदनाय नमः।
१२३ ॐ मृत्युञ्जयाय नमः।
१२४ ॐ व्याघ्राजिनाम्बराय नमः।
१२५ ॐ इच्छाशक्तिधराय नमः।
१२६ ॐ देवत्रात्रे नमः।
१२७ ॐ दैत्यविमर्दनाय नमः।
१२८ ॐ शम्भुवक्त्रोद्भवाय नमः।
१२९ ॐ शम्भुकोपघ्ने नमः।
१३० ॐ शम्भुहास्यभुवे नमः।
१३१ ॐ शम्भुतेजसे नमः।
१३२ ॐ शिवाशोकहारिणे नमः।
१३३ ॐ गौरीसुखावहाय नमः।
१३४ ॐ उमाङ्गमलजाय नमः।
१३५ ॐ गौरीतेजोभुवे नमः।
१३६ ॐ स्वर्धुनीभवाय नमः।
१३७ ॐ यज्ञकायाय नमः।
१३८ ॐ महानादाय नमः।
१३९ ॐ गिरिवर्ष्मणे नमः।
१४० ॐ शुभाननाय नमः।
१४१ ॐ सर्वात्मने नमः।
१४२ ॐ सर्वदेवात्मने नमः।
१४३ ॐ ब्रह्ममूर्ध्ने नमः।
१४४ ॐ ककुप्श्रुतये नमः।
१४५ ॐ ब्रह्माण्डकुम्भाय नमः।
१४६ ॐ चिद्व्योमभालाय नमः।
१४७ ॐ सत्यशिरोरुहाय नमः।
१४८ ॐ जगज्जन्मलयोन्मेषनिमिषाय नमः।
१४९ ॐ अग्न्यर्कसोमदृशे नमः।
१५० ॐ गिरीन्द्रैकरदाय नमः।
१५१ ॐ धर्माय नमः।
१५२ ॐ धर्मिष्ठाय नमः।
१५३ ॐ सामबृंहिताय नमः।
१५४ ॐ ग्रहर्क्षदशनाय नमः।
१५५ ॐ वाणीजिह्वाय नमः।
१५६ ॐ वासवनासिकाय नमः।
१५७ ॐ भ्रूमध्यसंस्थितकराय नमः।
१५८ ॐ ब्रह्मविद्यामदोत्कटाय नमः।
१५९ ॐ कुलाचलांसाय नमः।

१६० ॐ सोमार्कघण्टाय नमः।
१६१ ॐ रुद्रशिरोधराय नमः।
१६२ ॐ नदीनदभुजाय नमः।
१६३ ॐ सर्पाङ्गुलीकाय नमः।
१६४ ॐ तारकानखाय नमः।
१६५ ॐ व्योमनाभये नमः।
१६६ ॐ श्रीहृदयाय नमः।
१६७ ॐ मेरुपृष्ठाय नमः।
१६८ ॐ अर्णवोदराय नमः।
१६९ ॐ कुक्षिस्थयक्षगन्धर्वरक्षः किन्नरमानुषाय नमः।
१७० ॐ पृथ्वीकटये नमः।
१७१ ॐ सृष्टिलिङ्गाय नमः।
१७२ ॐ शैलोरवे नमः।
१७३ ॐ दस्त्रजानुकाय नमः।
१७४ ॐ पातालजङ्घाय नमः।
१७५ ॐ मुनिपात्कालाङ्गुष्ठाय नमः।
१७६ ॐ त्रयीतनवे नमः।
१७७ ॐ ज्योतिषे नमः।
१७८ ॐ मण्डलल‍ाङ्गूलाय नमः।
१७९ ॐ हृदयालातनिश्चलाय नमः।
१८० ॐ हृत्पद्मकर्णिकाशालिने नमः।
१८१ ॐ वियत्केलिसरोवराय नमः।
१८२ ॐ सद्भक्तध्याननिगडाय नमः।
१८३ ॐ पूजावारिनिवारिताय नमः।
१८४ ॐ प्रतापिने नमः।
१८५ ॐ कश्यपसुताय नमः।
१८६ ॐ गणपाय नमः।
१८७ ॐ विष्टपिने नमः।
१८८ ॐ बलिने नमः।
१८९ ॐ यशस्विने नमः।
१९० ॐ धार्मिकाय नमः।
१९१ ॐ स्वोजसे नमः।
१९२ ॐ प्रथमाय नमः।
१९३ ॐ प्रमथेश्वराय नमः।
१९४ ॐ चिन्तामणये नमः।
१९५ ॐ दीपपतये नमः।
१९६ ॐ कल्पद्रुमवनालयाय नमः।
१९७ ॐ रत्नमण्डपमध्यस्थाय नमः।
१९८ ॐ रत्नसिंहासनाश्रयाय नमः।
१९९ ॐ तीव्राशिरसे नमः।
२०० ॐ धृतपदाय नमः।
२०१ ॐ ज्वालिनीमौलिलालिताय नमः।
२०२ ॐ नन्दानन्दितपीठश्रिये नमः।
२०३ ॐ भोगदाय नमः।
२०४ ॐ भूषितासनाय नमः।
२०५ ॐ सकामदायिनीपीठाय नमः।
२०६ ॐ स्फुरदुग्रासनाश्रयाय नमः।
२०७ ॐ तेजोवतीशिरोरत्नाय नमः।
२०८ ॐ सत्यनित्यावतंसिताय नमः।
२०९ ॐ सविघ्ननाशिनीपीठाय नमः।
२१० ॐ सर्वशक्त्यम्बुजाश्रयाय नमः।
२११ ॐ लिपिपद्मासनाधाराय नमः।
२१२ ॐ वह्निधाम्ने नमः।
२१३ ॐ त्रयाश्रयाय नम।
२१४ ॐ उन्नतप्रपदागूढगुल्फसंवृतपार्ष्णिकाय नमः।
२१५ ॐ पीनजङ्घाय नमः।

२१६ ॐ श्लिष्टजानवे नमः।
२१७ ॐ स्थूलोरवे नमः।
२१८ ॐ प्रोन्नमत्कटये नमः।
२१९ ॐ निम्ननाभये नमः।
२२० ॐ स्थूलकुक्षये नमः।
२२१ ॐ पीनवक्षसे नमः।
२२२ ॐ बृहद्भुजाय नमः।
२२३ ॐ पीनस्कन्धाय नमः।
२२४ ॐ कम्बुकण्ठाय नमः।
२२५ ॐ लम्बोष्ठाय नमः।
२२६ ॐ लम्बनासिकाय नमः।
२२७ ॐ भग्नवामरदाय नमः।
२२८ ॐ तुङ्गसव्यदन्ताय नमः।
२२९ ॐ महाहनवे नमः।
२३० ॐ ह्रस्वनेत्रत्रयाय नमः।
२३१ ॐ शूर्पकर्णाय नमः।
२३२ ॐ निविडमस्तकाय नमः।
२३३ ॐ स्तबकाकारकुम्भाग्राय नमः।
२३४ ॐ रत्नमौलये नमः।
२३५ ॐ निरंकुशाय नमः।
२३६ ॐ सर्पहारकटीसूत्राय नमः।
२३७ ॐ सर्पयज्ञोपवीतवते नमः।
२३८ ॐ सर्पकोटीरकटकाय नमः।
२३९ ॐ सर्पग्रैवेयकाङ्गदाय नमः।
२४० ॐ सर्पकक्ष्योदराबन्धाय नमः।
२४१ ॐ सर्पराजोत्तरीयकाय नमः।
२४२ ॐ रक्ताय नमः।
२४३ ॐ रक्ताम्बरधराय नमः।
२४४ ॐ रक्तमाल्यविभूषणाय नमः।
२४५ ॐ रक्तेक्षणाय नमः।
२४६ ॐ रक्तकराय नमः।
२४७ ॐ रक्तताल्वोष्ठपल्लवाय नमः।
२४८ ॐ श्वेताय नमः।
२४९ ॐ श्वेताम्बरधराय नमः।
२५० ॐ श्वेतमाल्यविभूषणाय नमः।
२५१ ॐ श्वेतातपत्ररुचिराय नमः।
२५२ ॐ श्वेतचामरवीजिताय नमः।
२५३ ॐ सर्वावयवसम्पूर्णाय नमः।
२५४ ॐ सर्वलक्षणलक्षिताय नमः।
२५५ ॐ सर्वाभरणशोभाढ्याय नमः।
२५६ ॐ सर्वशोभासमन्विताय नमः।
२५७ ॐ सर्वमङ्गलमाङ्गल्याय नमः।
२५८ ॐ सर्वकारणकारणाय नमः।
२५९ ॐ सर्वदैककराय नमः।
२६० ॐ शार्ङ्गिणे नमः।
२६१ ॐ बीजापूरिणे नमः।
२६२ ॐ गदाधराय नमः।
२६३ ॐ इक्षुचापधराय नमः।
२६४ ॐ शूलिने नमः।
२६५ ॐ चक्रपाणये नमः।
२६६ ॐ सरोजभृते नमः।
२६७ ॐ पाशिने नमः।
२६८ ॐ धृतोत्पलाय नमः।
२६९ ॐ शालिमञ्जरीभृते नमः।
२७० ॐ स्वदन्तभृते नमः।
२७१ ॐ कल्पवल्लीधराय नमः।
२७२ ॐ विश्वाभयदैककराय नमः।
२७३ ॐ वशिने नमः।

२७४ ॐ अक्षमालाधराय नमः।
२७५ ॐ ज्ञानमुद्रावते नमः।
२७६ ॐ मुद्गरायुधाय नमः।
२७७ ॐ पूर्णपात्रिणे नमः।
२७८ ॐ कम्बुधराय नमः।
२७९ ॐ विधृतालिसमूहकाय नमः।
२८० ॐ मातुलुङ्गधराय नमः।
२८१ ॐ चूतकलिकाभृते नमः।
२८२ ॐ कुठारवते नमः।
२८३ ॐ पुष्करस्थाय नमः।
२८४ ॐ स्वर्णघटी पूर्णरत्नाभि-
वर्षकाय नमः।
२८५ ॐ भारतीसुन्दरीनाथाय नमः।
२८६ ॐ विनायकरतिप्रियाय नमः।
२८७ ॐ महालक्ष्मीप्रियतमाय नमः।
२८८ ॐ सिद्धलक्ष्मीमनोरमाय नमः।
२८९ ॐ रमारमेशपूर्वाङ्गाय नमः।
२९० ॐ दक्षिणोमामहेश्वराय नमः।
२९१ ॐ महीवराहवामाङ्गाय नमः।
२९२ ॐ रतिकन्दर्पपश्चिमाय नमः।
२९३ ॐ आमोदमोदजननाय नमः।
२९४ ॐ सप्रमोदाय नमः।
२९५ ॐ प्रमोदनाय नमः।
२९६ ॐ सामैधित्रे नमः।
२९७ ॐ समिद्धश्रिये नमः
२९८ ॐ ऋद्धिसिद्धिप्रवर्तकाय नमः।
२९९ ॐ दत्तसौमुख्यसुमुखाय नमः।
३०० ॐ कान्तिकन्दलिताश्रयाय नमः।
३०१ ॐ मदनावत्याश्रिताङ्घ्रये नमः।
३०२ ॐ कृतदौर्मुख्यदुर्मुखाय नमः।
३०३ ॐ विघ्नसम्पल्लवोपघ्नाय नमः।
३०४ ॐ सेवोन्निद्रमदद्रवाय नमः।
३०५ ॐ विघ्नकृन्निघ्नचरणाय नमः।
३०६ ॐ द्राविणीशक्तिसत्कृताय नमः।
३०७ ॐ तीव्राप्रसन्ननयनाय नमः।
३०८ ॐ ज्वालिनीपालितैकदृशे नमः।
३०९ ॐ मोहिनीमोहनाय नमः।
३१० ॐ भोगदायिनीकान्तिमण्डिताय नमः।
३११ ॐ कामिनीकान्तवक्त्रश्रिये नमः।
३१२ ॐ अधिष्ठितवसुन्धराय नमः।
३१३ ॐ वसुन्धरामदोन्नद्धाय नमः।
३१४ ॐ महाशङ्खनिधये नमः।
३१५ ॐ प्रभवे नमः।
३१६ ॐ नमद्वसुमतीमौलये नमः।
३१७ ॐ महापद्मनिधिप्रभवे नमः।
३१८ ॐ सर्वसद्गुणसंसेव्याय नमः।
३१९ ॐ शोचिष्केशहृदाश्रयाय नमः।
३२० ॐ ईशानमूर्ध्ने नमः।
३२१ ॐ देवेन्द्रशिखाय नमः।
३२२ ॐ पवननन्दनाय नमः।
३२३ ॐ अग्रप्रत्यग्रनयनाय नमः।
३२४ ॐ दिव्यास्त्राणां प्रयोगविदे नमः।
३२५ ॐ ऐरावतादिसर्वाशावारणा-
वरणप्रियाय नमः।
३२६ ॐ वज्राद्यस्त्रपरीवाराय नमः।
३२७ ॐ गणचण्डसमाश्रयाय नमः।
३२८ ॐ जयाजयपरीवाराय नमः।
३२९ ॐ विजयाविजयावहाय नमः।

३३० ॐ अजिताजितपादाब्जाय नमः।
३३१ ॐ नित्यानित्यावतंसिताय नमः।
३३२ ॐ विलासिनीकृतोल्लासाय नमः।
३३३ ॐ शौण्डिसौन्दर्यमण्डिताय नमः।
३३४ ॐ अनन्तानन्तसुखदाय नमः।
३३५ ॐ सुमङ्गलसुमङ्गलाय नमः।
३३६ ॐ इच्छाशक्तिज्ञानशक्तिक्रिया-
शक्तिनिषेविताय नमः।
३३७ ॐ सुभगासंश्रितपदाय नमः।
३३८ ॐ ललितालालिताश्रयाय नमः।
३३९ ॐ कामिनीकामनाय नमः।
३४० ॐ काममालिनीकेलिलालिताय नमः।
३४१ ॐ सरस्वत्याश्रयाय नमः।
३४२ ॐ गौरीनन्दनाय नमः।
३४३ ॐ श्रीनिकेतनाय नमः।
३४४ ॐ गुरुगुप्तपदाय नमः।
३४५ ॐ वाचा सिद्धाय नमः।
३४६ ॐ वागीश्वरीपतये नमः।
३४७ ॐ नलिनीकामुकाय नमः।
३४८ ॐ वामारामाय नमः।
३४९ ॐ ज्येष्ठामनोरमाय नमः।
३५० ॐ रौद्रीमुद्रितपादाब्जाय नमः।
३५१ ॐ हुंबीजाय नमः।
३५२ ॐ तुङ्गशक्तिकाय नमः।
३५३ ॐ विश्वादिजननत्राणाय नमः।
३५४ ॐ स्वाहाशक्तये नमः।
३५५ ॐ सकीलकाय नमः।
३५६ ॐ अमृताब्धिकृतावासाय नमः।
३५७ ॐ मदघूर्णितलोचनाय नमः।
३५८ ॐ उच्छिष्टगणाय नमः।
३५९ ॐ उच्छिष्टगणेशाय नमः।
३६० ॐ गणनायकाय नमः।
३६१ ॐ सर्वकालिकसंसिद्धये नमः।
३६२ ॐ नित्यशैवाय नमः।
३६३ ॐ दिगम्बराय नमः।
३६४ ॐ अनपायाय नमः।
३६५ ॐ अनन्तदृष्टये नमः।
३६६ ॐ अप्रमेयाय नमः।
३६७ ॐ अजरामराय नमः।
३६८ ॐ अनाविलाय नमः।
३६९ ॐ अप्रतिरथाय नमः।
३७० ॐ अच्युताय नमः।
३७१ ॐ अमृताय नमः।
३७२ ॐ अक्षराय नमः।
३७३ ॐ अप्रतर्क्याय नमः।
३७४ ॐ अक्षयाय नमः।
३७५ ॐ अजय्याय नमः।
३७६ ॐ अनाधाराय नमः।
३७७ ॐ अनामयाय नमः।
३७८ ॐ अमलाय नमः।
३७९ ॐ अमोघसिद्धये नमः।
३८० ॐ अद्वैताय नमः।
३८१ ॐ अघोराय नमः।
३८२ ॐ अप्रमिताननाय नमः।
३८३ ॐ अनाकाराय नमः।
३८४ ॐ अधिभूम्यग्निबलघ्नाय नमः।
३८५ ॐ अव्यक्तलक्षणाय नमः।
३८६ ॐ आधारपीठाय नमः।

३८७ ॐ आधाराय नमः।
३८८ ॐ आधाराधेयवर्जिताय नमः।
३८९ ॐ आखुकेतनाय नमः।
३९० ॐ आशापूरकाय नमः।
३९१ ॐ आखुमहारथाय नमः।
३९२ ॐ इक्षुसागरमध्यस्थाय नमः।
३९३ ॐ इक्षुभक्षणलालसाय नमः।
३९४ ॐ इक्षुचापातिरेकश्रिये नमः।
३९५ ॐ इक्षुचापनिषेविताय नमः।
३९६ ॐ इन्द्रगोपसमानश्रिये नमः।
३९७ ॐ इन्द्रनीलसमद्युतये नमः।
३९८ ॐ इन्दीवरदलश्यामाय नमः।
३९९ ॐ इन्दुमण्डलनिर्मलाय नमः।
४०० ॐ इध्मप्रियाय नमः।
४०१ ॐ इडाभागाय नमः।
४०२ ॐ इडाधामेन्दिराप्रियाय नमः।
४०३ ॐ इक्ष्वाकुविघ्नविध्वंसिने नमः।
४०४ ॐ इतिकर्तव्यतेप्सिताय नमः।
४०५ ॐ ईशानमौलये नमः।
४०६ ॐ ईशानाय नमः।
४०७ ॐ ईशानसुताय नमः।
४०८ ॐ ईतिघ्ने नमः।
४०९ ॐ ईषणात्रयकल्पान्ताय नमः।
४१० ॐ ईहामात्रविवर्जिताय नमः।
४११ ॐ उपेन्द्राय नमः।
४१२ ॐ उडुभृन्मौलिरुण्डेरकबलि-
प्रियाय नमः।
४१३ ॐ उन्नताननाय नमः।
४१४ ॐ उत्तुङ्गाय नमः।
४१५ ॐ उदारत्रिदशाग्रण्ये नमः।
४१६ ॐ ऊर्जस्वते नमः।
४१७ ॐ ऊष्मलमदाय नमः।
४१८ ॐ ऊहापोहदुरासदाय नमः।
४१९ ॐ ऋग्यजुःसामसम्भूतये नमः।
४२० ॐ ऋद्धिसिद्धिप्रवर्तकाय
नमः।
४२१ ॐ ऋजुचित्तैकसुलभाय नमः।
४२२ ॐ ऋणत्रयविमोचकाय नमः।
४२३ ॐ स्वभक्तानां लुप्तविघ्नाय नमः।
४२४ ॐ सुरद्विषां लुप्तशक्तये नमः।
४२५ ॐ विमुखार्चानां लुप्तश्रिये नमः।
४२६ ॐ लूताविस्फोटनाशनाय नमः।
४२७ ॐ एकारपीठमध्यस्थाय नमः।
४२८ ॐ एकपादकृतासनाय नमः।
४२९ ॐ एजिताखिलदैत्यश्रिये नमः।
४३० ॐ एजिताखिलसंश्रयाय नमः।
४३१ ॐ ऐश्वर्यनिधये नमः।
४३२ ॐ ऐश्वर्याय नमः।
४३३ ॐ ऐहिकामुष्मिकप्रदाय नमः।
४३४ ॐ ऐरम्मदसमोन्मेषाय नमः।
४३५ ॐ ऐरावतनिभाननाय नमः।
४३६ ॐ ओङ्कारवाच्याय नमः।
४३७ ॐ ओङ्काराय नमः।
४३८ ॐ ओजस्वते नमः।
४३९ ॐ ओषधिपतये नमः।
४४० ॐ औदार्यनिधये नमः।
४४१ ॐ औद्धत्यधुर्याय नमः।
४४२ ॐ औन्नत्यनिःस्वनाय नमः।

४४३ ॐ सुरनागानाम् अङ्कुशाय नमः।
४४४ ॐ सुरविद्विषाम् अङ्कुशाय नमः।
४४५ ॐ असमस्तविसर्गाणां पदेषु परिकीर्तिताय नमः।
४४६ ॐ कमण्डलुधराय नमः।
४४७ ॐ कल्पाय नमः।
४४८ ॐ कपर्दिने नमः।
४४९ ॐ कलभाननाय नमः।
४५० ॐ कर्मसाक्षिणे नमः।
४५१ ॐ कर्मकर्त्रे नमः।
४५२ ॐ कर्माकर्मफलप्रदाय नमः।
४५३ ॐ कदम्बगोलकाकाराय नमः।
४५४ ॐ कूष्माण्डगणनायकाय नमः।
४५५ ॐ कारुण्यदेहाय नमः।
४५६ ॐ कपिलाय नमः।
४५७ ॐ कथकाय नमः।
४५८ ॐ कटिसूत्रभृते नमः।
४५९ ॐ खर्वाय नमः।
४६० ॐ खड्गप्रियाय नमः।
४६१ ॐ खड्गखातान्तःस्थाय नमः।
४६२ ॐ खनिर्मलाय नमः।
४६३ ॐ खल्वाटशृङ्गनिलयाय नमः।
४६४ ॐ खट्वाङ्गिने नमः।
४६५ ॐ खंदुरासदाय नमः।
४६६ ॐ गुणाढ्याय नमः।
४६७ ॐ गहनाय नमः।
४६८ ॐ गस्थाय नमः।
४६९ ॐ गद्यपद्यसुधार्णवाय नमः।
४७० ॐ गद्यगानप्रियाय नमः।
४७१ ॐ गर्जाय नमः।
४७२ ॐ गीतगीर्वाणपूर्वजाय नमः।
४७३ ॐ गुह्याचाररताय नमः।
४७४ ॐ गुह्याय नमः।
४७५ ॐ गुह्यागमनिरूपिताय नमः।
४७६ ॐ गुहाशयाय नमः।
४७७ ॐ गुहाब्धिस्थाय नमः।
४७८ ॐ गुरुगम्याय नमः।
४७९ ॐ गुरोर्गुरवे नमः।
४८० ॐ घण्टाघर्घरिकामालिने नमः।
४८१ ॐ घटकुम्भाय नमः।
४८२ ॐ घटोदराय नमः।
४८३ ॐ चण्डाय नमः।
४८४ ॐ चण्डेश्वरसुहृदे नमः।
४८५ ॐ चण्डेशाय नमः।
४८६ ॐ चण्डविक्रमाय नमः।
४८७ ॐ चराचरपतये नमः।
४८८ ॐ चिन्तामणये नमः।
४८९ ॐ चर्वणलालसाय नमः।
४९० ॐ छन्दसे नमः।
४९१ ॐ छन्दोवपुषे नमः।
४९२ ॐ छन्दोदुर्लक्ष्याय नमः।
४९३ ॐ छन्दविग्रहाय नमः।
४९४ ॐ जगद्योनये नमः।
४९५ ॐ जगत्साक्षिणे नमः।
४९६ ॐ जगदीशाय नमः।
४९७ ॐ जगन्मयाय नमः।
४९८ ॐ जपाय नमः।
४९९ ॐ जपपराय नमः।

५०० ॐ जप्याय नमः।
५०१ ॐ जिह्वासिंहासनप्रभवे नमः।
५०२ ॐ झलज्झल्लोल्लसद्दान-
झङ्कारिभ्रमराकुलाय नमः।
५०३ ॐ टङ्कारस्फारसंरावाय नमः।
५०४ ॐ टङ्कारिमणिनूपुराय नमः।
५०५ ॐ ठद्वयिने नमः।
५०६ ॐ पल्लवान्तःस्थाय नमः।
५०७ ॐ सर्वमन्त्रैकसिद्धिदाय नमः।
५०८ ॐ डिण्डिमुण्डाय नमः।
५०९ ॐ डाकिनीशाय नमः।
५१० ॐ डामराय नमः।
५११ ॐ डिण्डिमप्रियाय नमः।
५१२ ॐ ढक्कानिनादमुदिताय नमः।
५१३ ॐ ढौङ्काय नमः।
५१४ ॐ ढुण्ढिविनायकाय नमः।
५१५ ॐ तत्त्वानां परमतत्त्वाय नमः।
५१६ ॐ तत्त्वम्पदनिरूपिताय नमः।
५१७ ॐ तारकान्तरसंस्थानाय नमः।
५१८ ॐ तारकाय नमः।
५१९ ॐ तारकान्तकाय नमः।
५२० ॐ स्थाणवे नमः।
५२१ ॐ स्थाणुप्रियाय नमः।
५२२ ॐ स्थात्रे नमः।
५२३ ॐ स्थावराय जङ्गमाय जगते नमः।
५२४ ॐ दक्षयज्ञप्रमथनाय नमः।
५२५ ॐ दात्रे नमः।
५२६ ॐ दानवमोहनाय नमः।
५२७ ॐ दयावते नमः।
५२८ ॐ दिव्यविभवाय नमः।
५२९ ॐ दण्डभृते नमः।
५३० ॐ दण्डनायकाय नमः।
५३१ ॐ दन्तप्रभिन्नाभ्रमालाय नमः।
५३२ ॐ दैत्यवारणदारणाय नमः।
५३३ ॐ दंष्ट्रालग्नद्विपघटाय नमः।
५३४ ॐ देवार्थनृगजाकृतये नमः।
५३५ ॐ धनधान्यपतये नमः।
५३६ ॐ धन्याय नमः।
५३७ ॐ धनदाय नमः।
५३८ ॐ धरणीधराय नमः।
५३९ ॐ ध्यानैकप्रकटाय नमः।
५४० ॐ ध्येयाय नमः।
५४१ ॐ ध्यानाय नमः।
५४२ ॐ ध्यानपरायणाय नमः।
५४३ ॐ नन्द्याय नमः।
५४४ ॐ नन्दिप्रियाय नमः।
५४५ ॐ नादाय नमः।
५४६ ॐ नादमध्यप्रतिष्ठिताय नमः।
५४७ ॐ निष्कलाय नमः।
५४८ ॐ निर्ममाय नमः।
५४९ ॐ नित्याय नमः।
५५० ॐ नित्यानित्याय नमः।
५५१ ॐ निरामयाय नमः।
५५२ ॐ परस्मै व्योम्ने नमः।
५५३ ॐ परस्मै धाम्ने नमः।
५५४ ॐ परमात्मने नमः।
५५५ ॐ परस्मै पदाय नमः।
५५६ ॐ परात्परस्मै नमः।
५५७ ॐ पशुपतये नमः।
५५८ ॐ पशुपाशविमोचकाय नमः।

५५९ ॐ पूर्णानन्दाय नमः।
५६० ॐ परानन्दाय नमः।
५६१ ॐ पुराणपुरुषोत्तमाय नमः।
५६२ ॐ पद्मप्रसन्ननयनाय नमः।
५६३ ॐ प्रणताज्ञानमोचनाय नमः।
५६४ ॐ प्रमाणप्रत्ययातीताय नमः।
५६५ ॐ प्रणतार्तिनिवारणाय नमः।
५६६ ॐ फलहस्ताय नमः।
५६७ ॐ फणिपतये नमः।
५६८ ॐ फेत्काराय नमः।
५६९ ॐ फाणितप्रियाय नमः।
५७० ॐ बाणार्चिताङ्घ्रियुगलाय नमः।
५७१ ॐ बालकेलिकुतूहलिने नमः।
५७२ ॐ ब्रह्मणे नमः।
५७३ ॐ ब्रह्मार्चितपदाय नमः।
५७४ ॐ ब्रह्मचारिणे नमः।
५७५ ॐ बृहस्पतये नमः।
५७६ ॐ बृहत्तमाय नमः।
५७७ ॐ ब्रह्मपराय नमः।
५७८ ॐ ब्रह्मण्याय नमः।
५७९ ॐ ब्रह्मवित्प्रियाय नमः।
५८० ॐ बृहन्नादाग्र्यचीत्काराय नमः।
५८१ ॐ ब्रह्माण्डावलिमेखलाय नमः।
५८२ ॐ भ्रूक्षेपदत्तलक्ष्मीकाय नमः।
५८३ ॐ भर्गाय नमः।
५८४ ॐ भद्राय नमः।
५८५ ॐ भयापहाय नमः।
५८६ ॐ भगवते नमः।
५८७ ॐ भक्तिसुलभाय नमः।
५८८ ॐ भूतिदाय नमः।
५८९ ॐ भूतिभूषणाय नमः।
५९० ॐ भव्याय नमः।
५९१ ॐ भूतालयाय नमः।
५९२ ॐ भोगदात्रे नमः।
५९३ ॐ भ्रूमध्यगोचराय नमः।
५९४ ॐ मन्त्राय नमः।
५९५ ॐ मन्त्रपतये नमः।
५९६ ॐ मन्त्रिणे नमः।
५९७ ॐ मदमत्ताय नमः।
५९८ ॐ मनोरमाय नमः।
५९९ ॐ मेखलावते नमः।
६०० ॐ मन्दगतये नमः।
६०१ ॐ मतिमते नमः।
६०२ ॐ कमलेक्षणाय नमः।
६०३ ॐ महाबलाय नमः।
६०४ ॐ महावीर्याय नमः।
६०५ ॐ महाप्राणाय नमः।
६०६ ॐ महामनसे नमः।
६०७ ॐ यज्ञाय नमः।
६०८ ॐ यज्ञपतये नमः।
६०९ ॐ यज्ञगोप्त्रे नमः।
६१० ॐ यज्ञफलप्रदाय नमः।
६११ ॐ यशस्कराय नमः।
६१२ ॐ योगगम्याय नमः।
६१३ ॐ याज्ञिकाय नमः।
६१४ ॐ याजकप्रियाय नमः।
६१५ ॐ रसाय नमः।
६१६ ॐ रसप्रियाय नमः।
६१७ ॐ रस्याय नमः।
६१८ ॐ रञ्जकाय नमः।

६१९ ॐ रावणार्चिताय नमः।
६२० ॐ रक्षोरक्षाकराय नमः।
६२१ ॐ रत्नगर्भाय नमः।
६२२ ॐ राज्यसुखप्रदाय नमः।
६२३ ॐ लक्ष्यालक्षप्रदाय नमः।
६२४ ॐ लक्ष्याय नमः।
६२५ ॐ लयस्थाय नमः।
६२६ ॐ लड्डुकप्रियाय नमः।
६२७ ॐ लानप्रियाय नमः।
६२८ ॐ लास्यपराय नमः।
६२९ ॐ लाभकृते नमः।
६३० ॐ लोकविश्रुताय नमः।
६३१ ॐ वरेण्याय नमः।
६३२ ॐ वह्निवदनाय नमः।
६३३ ॐ वन्द्याय नमः।
६३४ ॐ वेदान्तगोचराय नमः।
६३५ ॐ विकर्त्रे नमः।
६३६ ॐ विश्वतश्चक्षुषे नमः।
६३७ ॐ विधात्रे नमः।
६३८ ॐ विश्वतोमुखाय नमः।
६३९ ॐ वामदेवाय नमः।
६४० ॐ विश्वनेत्रे नमः।
६४१ ॐ वज्रिणे नमः।
६४२ ॐ वज्रनिवारणाय नमः।
६४३ ॐ विश्वबन्धनविष्कम्भाधाराय नमः।
६४४ ॐ विश्वेश्वरप्रभवे नमः।
६४५ ॐ शब्दब्रह्मणे नमः।
६४६ ॐ शमप्राप्याय नमः।
६४७ ॐ शम्भुशक्तिगणेश्वराय नमः।
६४८ ॐ शास्त्रे नमः।
६४९ ॐ शिखाग्रनिलयाय नमः।
६५० ॐ शरण्याय नमः।
६५१ ॐ शिखरीश्वराय नमः।
६५२ ॐ षड्ऋतुकुसुमस्त्रग्विणे नमः।
६५३ ॐ षडाधाराय नमः।
६५४ ॐ षडक्षराय नमः।
६५५ ॐ संसारवैद्याय नमः।
६५६ ॐ सर्वज्ञाय नमः।
६५७ ॐ सर्वभेषजभेषजाय नमः।
६५८ ॐ सृष्टिस्थितिलयक्रीडाय नमः।
६५९ ॐ सुरकुञ्जरभेदनाय नमः।
६६० ॐ सिन्दूरितमहाकुम्भाय नमः।
६६१ ॐ सदसद्व्यक्तिदायकाय नमः।
६६२ ॐ साक्षिणे नमः।
६६३ ॐ समुद्रमथनाय नमः।
६६४ ॐ स्वसंवेद्याय नमः।
६६५ ॐ स्वदक्षिणाय नमः।
६६६ ॐ स्वतन्त्राय नमः।
६६७ ॐ सत्यसंकल्पाय नमः।
६६८ ॐ सामगानरताय नमः।
६६९ ॐ सुखिने नमः।
६७० ॐ हंसाय नमः।
६७१ ॐ हस्तिपिशाचीशाय नमः।
६७२ ॐ हवनाय नमः।
६७३ ॐ हव्यकव्यभुजे नमः।
६७४ ॐ हव्याय नमः।
६७५ ॐ हुतप्रियाय नमः।
६७६ ॐ हर्षाय नमः।
६७७ ॐ हृल्लेखामन्त्रमध्यगाय नमः।

६७८ ॐ क्षेत्राधिपाय नमः।
६७९ ॐ क्षमाभर्त्रे नमः।
६८० ॐ क्षमापरपरायणाय नमः।
६८१ ॐ क्षिप्रक्षेमकराय नमः।
६८२ ॐ क्षेमानन्दाय नमः।
६८३ ॐ क्षोणीसुरद्रुमाय नमः।
६८४ ॐ धर्मप्रदाय नमः।
६८५ ॐ अर्थदाय नमः।
६८६ ॐ कामदात्रे नमः।
६८७ ॐ सौभाग्यवर्धनाय नमः।
६८८ ॐ विद्याप्रदाय नमः।
६८९ ॐ विभवदाय नमः।
६९० ॐ भुक्तिमुक्तिप्रदायकाय नमः।
६९१ ॐ आभिरूप्यकराय नमः।
६९२ ॐ वीराय नमः।
६९३ ॐ श्रीप्रदाय नमः।
६९४ ॐ विजयप्रदाय नमः।
६९५ ॐ सर्ववश्यकराय नमः।
६९६ ॐ गर्भदोषघ्ने नमः।
६९७ ॐ पुत्रपौत्रदाय नमः।
६९८ ॐ मेधादाय नमः।
६९९ ॐ कीर्तिदाय नमः।
७०० ॐ शोकहारिणे नमः।
७०१ ॐ दौर्भाग्यनाशनाय नमः।
७०२ ॐ श्रीशोकहारिणे नमः।
७०३ ॐ दौर्भाग्यनाशनाय नमः।
७०४ ॐ सर्वशक्तिभृते नमः।
७०५ ॐ प्रतिवादिमुखस्तम्भाय नमः।
७०६ ॐ हृष्टचित्तप्रसादनाय नमः।
७०७ ॐ पराभिचारशमनाय नमः।
७०८ ॐ दुःखभञ्जनकारकाय नमः।
७०९ ॐ लवाय नमः।
७१० ॐ त्रुटये नमः।
७११ ॐ कलायै नमः।
७१२ ॐ काष्ठायै नमः।
७१३ ॐ निमेषाय नमः।
७१४ ॐ तत्पराय नमः।
७१५ ॐ क्षणाय नमः।
७१६ ॐ घट्यै नमः।
७१७ ॐ मुहूर्ताय नमः।
७१८ ॐ प्रहराय नमः।
७१९ ॐ दिवानक्ताय नमः।
७२० ॐ अहर्निशाय नमः।
७२१ ॐ पक्षाय नमः।
७२२ ॐ मासाय नमः।
७२३ ॐ अयनाय नमः।
७२४ ॐ वर्षाय नमः।
७२५ ॐ युगाय नमः।
७२६ ॐ कल्पाय नमः।
७२७ ॐ महालयाय नमः।
७२८ ॐ राशये नमः।
७२९ ॐ तारायै नमः।
७३० ॐ तिथये नमः।
७३१ ॐ योगाय नमः।
७३२ ॐ वाराय नमः।
७३३ ॐ करणाय नमः।
७३४ ॐ अंशकाय नमः।
७३५ ॐ लग्नाय नमः।
७३६ ॐ होरायै नमः।
७३७ ॐ कालचक्राय नमः।

७३८ ॐ मेरवे नमः।
७३९ ॐ सप्तर्षिभ्यो नमः।
७४० ॐ ध्रुवाय नमः।
७४१ ॐ राहवे नमः।
७४२ ॐ मन्दाय नमः।
७४३ ॐ कवये नमः।
७४४ ॐ जीवाय नमः।
७४५ ॐ बुधाय नमः।
७४६ ॐ भौमाय नमः।
७४७ ॐ शशिने नमः।
७४८ ॐ रवये नमः।
७४९ ॐ कालाय नमः।
७५० ॐ सृष्ट्यै नमः।
७५१ ॐ स्थित्यै नमः।
७५२ ॐ विश्वस्मै नमः।
७५३ ॐ स्थावराय नमः।
७५४ ॐ जङ्गमाय नमः।
७५५ ॐ भुवे नमः।
७५६ ॐ अद्भ्यो नमः।
७५७ ॐ अग्नये नमः।
७५८ ॐ मरुद्भ्यो नमः।
७५९ ॐ व्योम्ने नमः।
७६० ॐ अहंकृतये नमः।
७६१ ॐ प्रकृतये नमः।
७६२ ॐ पुंसे नमः।
७६३ ॐ ब्रह्मणे नमः।
७६४ ॐ विष्णवे नमः।
७६५ ॐ शिवाय नमः।
७६६ ॐ रुद्राय नमः।
७६७ ॐ ईशाय नमः।
७६८ ॐ शक्तये नमः।
७६९ ॐ सदाशिवाय नमः।
७७० ॐ त्रिदशेभ्यो नमः।
७७१ ॐ पितृभ्यो नमः।
७७२ ॐ सिद्धेभ्यो नमः।
७७३ ॐ यक्षेभ्यो नमः।
७७४ ॐ रक्षोभ्यो नमः।
७७५ ॐ किन्नरेभ्यो नमः।
७७६ ॐ साध्येभ्यो नमः।
७७७ ॐ विद्याधरेभ्यो नमः।
७७८ ॐ भूतेभ्यो नमः।
७७९ ॐ मनुष्येभ्यो नमः।
७८० ॐ पशुभ्यो नमः।
७८१ ॐ खगेभ्यो नमः।
७८२ ॐ समुद्रेभ्यो नमः।
७८३ ॐ सरिद्भ्यो नमः।
७८४ ॐ शैलेभ्यो नमः।
७८५ ॐ भूतभव्यभवोद्भवाय नमः।
७८६ ॐ सांख्याय नमः।
७८७ ॐ पातञ्जलयोगाय नमः।
७८८ ॐ पुराणेभ्यः नमः।
७८९ ॐ श्रुतये नमः।
७९० ॐ स्मृतये नमः।
७९१ ॐ वेदाङ्गेभ्यो नमः।
७९२ ॐ सदाचाराय नमः।
७९३ ॐ मीमांसायै नमः।
७९४ ॐ न्यायविस्तराय नमः।
७९५ ॐ आयुर्वेदाय नमः।
७९६ ॐ धनुर्वेदाय नमः।
७९७ ॐ गान्धर्वाय नमः।

७९८ ॐ काव्यनाटकाय नमः।
७९९ ॐ वैखानसाय नमः।
८०० ॐ भागवताय नमः।
८०१ ॐ सात्वताय नमः।
८०२ ॐ पाञ्चरात्रकाय नमः।
८०३ ॐ शैवाय नमः।
८०४ ॐ पाशुपताय नमः।
८०५ ॐ कालमुखाय नमः।
८०६ ॐ भैरवशासनाय नमः।
८०७ ॐ शाक्ताय नमः।
८०८ ॐ वैनायकाय नमः।
८०९ ॐ सौराय नमः।
८१० ॐ जैनाय नमः।
८११ ॐ आर्हतसंहिताय नमः।
८१२ ॐ सते नमः।
८१३ ॐ असते नमः।
८१४ ॐ व्यक्ताय नमः।
८१५ ॐ अव्यक्ताय नमः।
८१६ ॐ सचेतनाय नमः।
८१७ ॐ अचेतनाय नमः।
८१८ ॐ बन्धाय नमः।
८१९ ॐ मोक्षाय नमः।
८२० ॐ सुखाय नमः।
८२१ ॐ भोगाय नमः।
८२२ ॐ योगाय नमः।
८२३ ॐ सत्याय नमः।
८२४ ॐ अणवे नमः।
८२५ ॐ महते नमः।
८२६ ॐ स्वस्तिहुंफट्स्वधास्वाहा-श्रौषड्वौषड्वषण्नमःरूपाय नमः।
८२७ ॐ ज्ञानविज्ञानाय नमः।
८२८ ॐ आनन्दाय नमः।
८२९ ॐ बोधाय नमः।
८३० ॐ संविदे नमः।
८३१ ॐ शमाय नमः।
८३२ ॐ यमाय नमः।
८३३ ॐ एकस्मै नमः।
८३४ ॐ एकाक्षराधाराय नमः।
८३५ ॐ एकाक्षरपरायणाय नमः।
८३६ ॐ एकाग्रधियै नमः।
८३७ ॐ एकवीराय नमः।
८३८ ॐ एकानेकस्वरूपधृषे नमः।
८३९ ॐ द्विरूपाय नमः।
८४० ॐ द्विभुजाय नमः।
८४१ ॐ द्व्यक्षाय नमः।
८४२ ॐ द्विरदाय नमः।
८४३ ॐ द्वीपरक्षकाय नमः।
८४४ ॐ द्वैमातुराय नमः।
८४५ ॐ द्विवदनाय नमः।
८४६ ॐ द्वन्द्वातीताय नमः।
८४७ ॐ द्वयातिगाय नमः।
८४८ ॐ त्रिधाम्ने नमः।
८४९ ॐ त्रिकराय नमः।
८५० ॐ त्रेत्रे नमः।
८५१ ॐ त्रिवर्गफलदायकाय नमः।
८५२ ॐ त्रिगुणात्मने नमः।
८५३ ॐ त्रिलोकादये नमः।
८५४ ॐ त्रिशक्तीशाय नमः।
८५५ ॐ त्रिलोचनाय नमः।
८५६ ॐ चतुर्बाहवे नमः।

८५७ ॐ चतुर्दन्ताय नमः।
८५८ ॐ चतुरात्मने नमः।
८५९ ॐ चतुर्मुखाय नमः।
८६० ॐ चतुर्विधोपायमयाय नमः।
८६१ ॐ चतुर्वर्णाश्रमाश्रयाय नमः।
८६२ ॐ चतुर्विधवचसे नमः।
८६३ ॐ वृत्तिपरिवर्तप्रवर्तकाय नमः।
८६४ ॐ चतुर्थीपूजनप्रीताय नमः।
८६५ ॐ चतुर्थीतिथिसम्भवाय नमः।
८६६ ॐ पञ्चाक्षरात्मने नमः।
८६७ ॐ पञ्चात्मने नमः।
८६८ ॐ पञ्चास्याय नमः।
८६९ ॐ पञ्चकृत्यकृते नमः।
८७० ॐ पञ्चाधाराय नमः।
८७१ ॐ पञ्चवर्णाय नमः।
८७२ ॐ पञ्चाक्षरपरायणाय नमः।
८७३ ॐ पञ्चतालाय नमः।
८७४ ॐ पञ्चकराय नमः।
८७५ ॐ पञ्चप्रणवभाविताय नमः।
८७६ ॐ पञ्चब्रह्ममयस्फूर्तये नमः।
८७७ ॐ पञ्चवारणवारिताय नमः।
८७८ ॐ पञ्चभक्ष्यप्रियाय नमः।
८७९ ॐ पञ्चबाणाय नमः।
८८० ॐ पञ्चशिवात्मकाय नमः।
८८१ ॐ षट्कोणपीठाय नमः।
८८२ ॐ षट्चक्रधाम्ने नमः।
८८३ ॐ षड्ग्रन्थिभेदकाय नमः।
८८४ ॐ षडध्वध्वान्तविध्वंसिने नमः।
८८५ ॐ षडङ्गुलमहाह्रदाय नमः।
८८६ ॐ षण्मुखाय नमः।
८८७ ॐ षण्मुखभ्रात्रे नमः।
८८८ ॐ षट्शक्तिपरिवारिताय नमः।
८८९ ॐ षड्वैरिवर्गविध्वंसिने नमः।
८९० ॐ षडूर्मिभयभञ्जनाय नमः।
८९१ ॐ षट्तर्कदूराय नमः।
८९२ ॐ षट्कर्मनिरताय नमः।
८९३ ॐ षड्रसाश्रयाय नमः।
८९४ ॐ सप्तपातालचरणाय नमः।
८९५ ॐ सप्तद्वीपोरुमण्डलाय नमः।
८९६ ॐ सप्तस्वर्लोकमुकुटाय नमः।
८९७ ॐ सप्तसप्तिवरप्रदाय नमः।
८९८ ॐ सप्ताङ्गराज्यसुखदाय नमः।
८९९ ॐ सप्तर्षिगणमण्डिताय नमः।
९०० ॐ सप्तच्छन्दोनिधये नमः।
९०१ ॐ सप्तहोत्रे नमः।
९०२ ॐ सप्तस्वराश्रयाय नमः।
९०३ ॐ सप्ताब्धिकेलिकासाराय नमः।
९०४ ॐ सप्तमातृनिषेविताय नमः।
९०५ ॐ सप्तच्छन्दोमोदमदाय नमः।
९०६ ॐ सप्तच्छन्दसे नमः।
९०७ ॐ मखप्रभवे नमः।
९०८ ॐ अष्टमूर्तये नमः।
९०९ ॐ ध्येयमूर्तये नमः।
९१० ॐ अष्टप्रकृतिकारणाय नमः।
९११ ॐ अष्टाङ्गयोगफलभुवे नमः।
९१२ ॐ अष्टपत्राम्बुजासनाय नमः।
९१३ ॐ अष्टशक्तिसमृद्धिश्रिये नमः।
९१४ ॐ अष्टैश्वर्यप्रदायकाय नमः।
९१५ ॐ अष्टपीठोपपीठश्रिये नमः।
९१६ ॐ अष्टमातृसमावृताय नमः।

११७ ॐ अष्टभैरवसेव्याय नमः।
११८ ॐ अष्टवसुवन्द्याय नमः।
११९ ॐ अष्टमूर्तिभृते नमः।
१२० ॐ अष्टचक्रस्फुरन्मूर्तये नमः।
१२१ ॐ अष्टद्रव्यहविःप्रियाय नमः।
१२२ ॐ नवनागासनाध्यासिने नमः।
१२३ ॐ नवविध्यनुशासित्रे नमः।
१२४ ॐ नवद्वारपुराधाराय नमः।
१२५ ॐ नवद्वारनिकेतनाय नमः।
१२६ ॐ नवनारायणस्तुत्याय नमः।
१२७ ॐ नवदुर्गानिषेविताय नमः।
१२८ ॐ नवनाथमहानाथाय नमः।
१२९ ॐ नवनागविभूषणाय नमः।
१३० ॐ नवरत्नविचित्राङ्गाय नमः।
१३१ ॐ नवशक्तिशिरोधृताय नमः।
१३२ ॐ दशात्मकाय नमः।
१३३ ॐ दशभुजाय नमः।
१३४ ॐ दशदिक्पतिवन्दिताय नमः।
१३५ ॐ दशाध्यायाय नमः।
१३६ ॐ दशप्राणाय नमः।
१३७ ॐ दशेन्द्रियनियामकाय नमः।
१३८ ॐ दशाक्षरमहामन्त्राय नमः।
१३९ ॐ दशाशाव्याधिविग्रहाय नमः।
१४० ॐ एकादशादिभिः रुद्रैः स्तुताय नमः।
१४१ ॐ एकादशाक्षराय नमः।
१४२ ॐ द्वादशोद्दण्डदोर्दण्डाय नमः।
१४३ ॐ द्वादशान्तनिकेतनाय नमः।
१४४ ॐ त्रयोदशभिदे नमः।
१४५ ॐ आभिन्नविश्वेदेवाधिदैवताय नमः।
१४६ ॐ चतुर्दशेन्द्रवरदाय नमः।
१४७ ॐ चतुर्दशमनुप्रभवे नमः।
१४८ ॐ चतुर्दशादिविद्याढ्याय नमः।
१४९ ॐ चतुर्दशजगत्प्रभवे नमः।
१५० ॐ सामपञ्चदशाय नमः।
१५१ ॐ पञ्चदशीशीतांशुनिर्मलाय नमः।
१५२ ॐ षोडशाधारनिलयाय नमः।
१५३ ॐ षोडशस्वरमातृकाय नमः।
१५४ ॐ षोडशान्तपदावासाय नमः।
१५५ ॐ षोडशेन्दुकलात्मकाय नमः।
१५६ ॐ कलासप्तदशिने नमः।
१५७ ॐ सप्तदशाय नमः।
१५८ ॐ सप्तदशाक्षराय नमः।
१५९ ॐ अष्टादशद्वीपपतये नमः।
१६० ॐ अष्टादशपुराणकृते नमः।
१६१ ॐ अष्टादशौषधीसृष्टये नमः।
१६२ ॐ अष्टादशविधिस्मृताय नमः।
१६३ ॐ अष्टादशलिपिव्यष्टिसमष्टि-ज्ञानकोविदाय नमः।
१६४ ॐ एकविंशाय नमः।
१६५ ॐ पुंसे नमः।
१६६ ॐ एकविंशत्यङ्गुलिपल्लवाय नमः।
१६७ ॐ चतुर्विंशतितत्त्वात्मने नमः।
१६८ ॐ पञ्चविंशाख्यपूरुषाय नमः।
१६९ ॐ सप्तविंशतितारेशाय नमः।
१७० ॐ सप्तविंशतियोगकृते नमः।
१७१ ॐ द्वात्रिंशद्भैरवाधीशाय नमः।
१७२ ॐ चतुस्त्रिंशन्महाह्रदाय नमः।
१७३ ॐ षट्त्रिंशत्तत्त्वसम्भूतये नमः।
१७४ ॐ अष्टत्रिंशत्कलातनवे नमः।

९७५ ॐ नमदेकोनपञ्चाशन्मरुद्वर्ग-निरर्गलाय नमः।
९७६ ॐ पञ्चाशदक्षरश्रेणये नमः।
९७७ ॐ पञ्चाशद्रुद्रविग्रहाय नमः।
९७८ ॐ पञ्चाशद्विष्णुशक्तीशाय नमः।
९७९ ॐ पञ्चाशन्मातृकालयाय नमः।
९८० ॐ द्विपञ्चाशद्वपुः श्रेणये नमः।
९८१ ॐ त्रिषष्ट्यक्षरसंश्रयाय नमः।
९८२ ॐ चतुष्षष्ट्यर्णनिर्णेत्रे नमः।
९८३ ॐ चतुष्षष्टिकलानिधये नमः।
९८४ ॐ चतुष्षष्टिमहासिद्धयोगिनी-वृन्दवन्दिताय नमः।
९८५ ॐ अष्टषष्टिमहातीर्थक्षेत्र-भैरवभावनाय नमः।
९८६ ॐ चतुर्नवतिमन्त्रात्मने नमः।
९८७ ॐ षण्णवत्यधिकप्रभवे नमः।
९८८ ॐ शतानन्दाय नमः।
९८९ ॐ शतधृतये नमः।
९९० ॐ शतपत्रायतेक्षणाय नमः।
९९१ ॐ शतानीकाय नमः।
९९२ ॐ शतमखाय नमः।
९९३ ॐ शतधारवरायुधाय नमः।
९९४ ॐ सहस्रपत्रनिलयाय नमः।
९९५ ॐ सहस्रफणभूषणाय नमः।
९९६ ॐ सहस्रशीर्ष्णे नमः।
९९७ ॐ पुरुषाय नमः।
९९८ ॐ सहस्राक्षाय नमः।
९९९ ॐ सहस्रपदे नमः।
१००० ॐ सहस्रनामसंस्तुत्याय नमः।
१००१ ॐ सहस्राक्षबलापहाय नमः।
१००२ ॐ दशसाहस्रफणिभृते नमः।
१००३ ॐ फणिराजकृतासनाय नमः।
१००४ ॐ अष्टाशीतिसहस्रौघमहर्षि-स्तोत्रयन्त्रिताय नमः।
१००५ ॐ लक्षाधीशप्रियाधाराय नमः।
१००६ ॐ लक्षाधीशमनोमयाय नमः।
१००७ ॐ चतुर्लक्षजपप्रीताय नमः।
१००८ ॐ चतुर्लक्षप्रकाशिताय नमः।
१००९ ॐ चतुरशीतिलक्षाणां जीवानां देहसंस्थिताय नमः।
१०१० ॐ कोटिसूर्यप्रतीकाशाय नमः।
१०११ ॐ कोटिचन्द्रांशुनिर्मलाय नमः।
१०१२ ॐ शिवाभवाध्युष्टकोटि-विनायकधुरन्धराय नमः।
१०१३ ॐ सप्तकोटिमहामन्त्रमन्त्रिता-वयवद्युतये नमः।
१०१४ ॐ त्रयस्त्रिंशत्कोटिसुरश्रेणी-प्रणतपादुकाय नमः।
१०१५ ॐ अनन्तदेवतासेव्याय नमः।
१०१६ ॐ अनन्तमुनिसंस्तुताय नमः।
१०१७ ॐ अनन्तनाम्ने नमः।
१०१८ ॐ अनन्तश्रिये नमः।
१०१९ ॐ अनन्तानन्तसौख्यदाय नमः।

*॥ इति शाक्तप्रमोदान्तर्गतगणेशतन्त्रात् उद्धृता श्रीवक्रतुण्ड-महागणपतिसहस्रनामावलिः सम्पूर्णा ॥*

# श्रीगणपत्यष्टोत्तरशतनामस्तोत्रम्

ॐ गणेश्वरो गणक्रीडो महागणपतिस्तथा।
विश्वकर्ता विश्वमुखो दुर्जयो धूर्जयो जयः॥
सुरूपः सर्वनेत्राधिवासो वीरासनाश्रयः।
योगाधिपस्तारकस्थः पुरुषो गजकर्णकः॥
चित्राङ्गः श्यामदशनो भालचन्द्रश्चतुर्भुजः।
शम्भुतेजा यज्ञकायः सर्वात्मा सामबृंहितः॥
कुलाचलांसो व्योमनाभिः कल्पद्रुमवनालयः।
निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः॥
पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः।
सर्वावयवसम्पूर्णः सर्वलक्षणलक्षितः॥
इक्षुचापधरः शूली कान्तिकन्दलिताश्रयः।
अक्षमालाधरो ज्ञानमुद्रावान् विजयावहः॥
कामिनीकामनाकाममालिनीकेलिलालितः।
अमोघसिद्धिराधार आधाराधेयवर्जितः॥
इन्दीवरदलश्याम इन्दुमण्डलनिर्मलः।
कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः॥
कमण्डलुधरः कल्पः कपर्दी कटिसूत्रभृत्।
कारुण्यदेहः कपिलो गुह्यागमनिरूपितः॥
गुहाशयो गुहाब्धिस्थो घटकुम्भो घटोदरः।
पूर्णानन्दः परानन्दो धनदो धरणीधरः॥

बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः।
भव्यो भूतालयो भोगदाता चैव महामनाः॥
वरेण्यो वामदेवश्च वन्द्यो वज्रनिवारणः।
विश्वकर्ता विश्वचक्षुर्हवनं हव्यकव्यभुक्॥
स्वतन्त्रः सत्यसंकल्पस्तथा सौभाग्यवर्धनः।
कीर्तिदः शोकहारी च त्रिवर्गफलदायकः॥
चतुर्बाहुश्चतुर्दन्तश्चतुर्थीतिथिसम्भवः।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥
कामरूपः कामगतिर्द्विरदो द्वीपरक्षकः।
क्षेत्राधिपः क्षमाभर्ता लयस्थो लड्डुकप्रियः॥
प्रतिवादिमुखस्तम्भो दुष्टचित्तप्रसादनः।
भगवान् भक्तिसुलभो याज्ञिको याजकप्रियः॥
इत्येवं देवदेवस्य गणराजस्य धीमतः।
शतमष्टोत्तरं नाम्नां सारभूतं प्रकीर्तितम्॥
सहस्रनाम्नामाकृष्य मया प्रोक्तं मनोहरम्।
ब्राह्मे मुहूर्ते चोत्थाय स्मृत्वा देवं गणेश्वरम्।
पठेत्स्तोत्रमिदं भक्त्या गणराजः प्रसीदति॥

*॥ इति श्रीगणेशपुराणे उपासनाखण्डे श्रीगणपत्यष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्॥*

# श्रीसूर्याष्टोत्तरशतनामस्तोत्रम्

धौम्य उवाच

सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रविः।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः॥
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम्।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च॥
इन्द्रो विवस्वान् दीप्तांशुः शुचिः शौरिः शनैश्चरः।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः॥
वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः॥
कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः।
कला काष्ठा मुहूर्त्तश्च क्षपा यामस्तथा क्षणः॥
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः॥
कालाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः।
वरुणः सागरोंऽशश्च जीमूतो जीवनोऽरिहा॥
भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः।
स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः॥
अनन्तः कपिलो भानुः कामदः सर्वतोमुखः।
जयो विशालो वरदः सर्वभूतनिषेवितः॥
मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारणः।
धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः॥

द्वादशात्मारविन्दाक्षः पिता माता पितामहः।
प्रजाद्वारं स्वर्गद्वारं मोक्षद्वारं त्रिविष्टपम्॥
दाहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः।
चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः॥
एतद् वै कीर्तनीयस्य सूर्यस्यामिततेजसः।
नामाष्टशतकं चेदं प्रोक्तमेतत् स्वयम्भुवा॥
सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितम्।
वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करम्॥
सूर्योदये यः सुसमाहितः पठेत् स पुत्रदारान् धनरत्नसंचयान्।
लभेत जातिस्मरतान्तरः सदा धृतिं च मेधां च स विन्दते पुमान्॥
इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुद्धमनाः समाहितः।
विमुच्यते शोकदवाग्निसागराल्लभेत कामान् मनसा यथेप्सितान्॥

*॥ इति श्रीमहाभारते वनपर्वणि धौम्ययुधिष्ठिरसंवादे*
*श्रीसूर्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्॥*

# श्रीविष्णोरष्टोत्तरशतनामस्तोत्रम्

अष्टोत्तरशतं नाम्नां विष्णोरतुलतेजसः।
यस्य श्रवणमात्रेण नरो नारायणो भवेत्॥
विष्णुर्जिष्णुर्वषट्कारो देवदेवो वृषाकपिः।
दामोदरो दीनबन्धुरादिदेवोऽदितेः सुतः॥
पुण्डरीकः परानन्दः परमात्मा परात्परः।
परशुधारी विश्वात्मा कृष्णः काली मलापहः॥
कौस्तुभोद्भासितोरस्को नरो नारायणो हरिः।
हरो हरप्रियः स्वामी वैकुण्ठो विश्वतोमुखः॥
हृषीकेशोऽप्रमेयात्मा वराहो धरणीधरः।
वामनो वेदवक्ता च वासुदेवः सनातनः॥
रामो विरामो विरजो रावणारी रमापतिः।
वैकुण्ठवासी वसुमान् धनदो धरणीधरः॥
धर्मेशो धरणीनाथो ध्येयो धर्मभृतां वरः।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥
सर्वगः सर्ववित् सर्वः शरण्यः साधुवल्लभः।
कौसल्यानन्दनः श्रीमान् रक्षःकुलविनाशकः॥
जगत्कर्ता जगद्धर्ता जगज्जेता जनार्तिहा।
जानकीवल्लभो देवो जयरूपो जलेश्वरः॥
क्षीराब्धिवासी क्षीराब्धितनयावल्लभस्तथा।
शेषशायी पन्नगारिवाहनोविष्टरश्रवाः॥

माधवो मथुरानाथो मोहदो मोहनाशनः ।
दैत्यारिः पुण्डरीकाक्षो ह्यच्युतो मधुसूदनः ॥
सोमसूर्याग्निनयनो नृसिंहो भक्तवत्सलः ।
नित्यो निरामयः शुद्धो नरदेवो जगत्प्रभुः ॥
हयग्रीवो जितरिपुरुपेन्द्रो रुक्मिणीपतिः ।
सर्वदेवमयः श्रीशः सर्वाधारः सनातनः ॥
सौम्यः सौम्यप्रदः स्त्रष्टा विष्वक्सेनो जनार्दनः ।
यशोदातनयो योगी योगशास्त्रपरायणः ॥
रुद्रात्मको रुद्रमूर्ती राघवो मधुसूदनः ।
इति ते कथितं दिव्यं नाम्नामष्टोत्तरं शतम् ॥
सर्वपापहरं पुण्यं विष्णोरमिततेजसः ।
दुःखदारिद्र्यदौर्भाग्यनाशनं सुखवर्धनम् ॥
सर्वसम्पत्करं सौम्यं महापातकनाशनम् ।
प्रातरुत्थाय विप्रेन्द्र पठेदेकाग्रमानसः ।
तस्य नश्यन्ति विपदां राशयः सिद्धिमाप्नुयात् ॥

*॥ इति श्रीपद्मपुराणे उत्तरखण्डे श्रीविष्णोरष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥*

# श्रीशिवाष्टोत्तरशतनामस्तोत्रम्

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः॥
शंकरः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः॥
भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः।
उग्रः कपालिः कामारिरन्धकासुरसूदनः॥
गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः॥
कैलासवासी कवची कठोरस्त्रिपुरान्तकः।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः॥
सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः॥
हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः॥
हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः॥
कृत्तिवासा पुरारातिर्भगवान् प्रमथाधिपः।
मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः॥
व्योमकेशो महासेनजनकश्चारुविक्रमः।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः॥

अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।
शाश्वतः खण्डपरशुरजपाशविमोचकः ॥
मृडः पशुपतिर्देवो महादेवोऽव्ययः प्रभुः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥
भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ।
अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥
इमानि दिव्यनामानि जप्यन्ते सर्वदा मया ।
नामकल्पलतेयं मे सर्वाभीष्टप्रदायिनी ॥
नामान्येतानि सुभगे शिवदानि न संशयः ।
वेदसर्वस्वभूतानि नामान्येतानि वस्तुतः ॥
एतानि यानि नामानि तानि सर्वार्थदान्यतः ।
जप्यन्ते सादरं नित्यं मया नियमपूर्वकम् ॥
वेदेषु शिवनामानि श्रेष्ठान्यघहराणि च ।
सन्त्यनन्तानि सुभगे वेदेषु विविधेष्वपि ॥
तेभ्यो नामानि संगृह्य कुमाराय महेश्वरः ।
अष्टोत्तरसहस्रं तु नाम्नामुपदिशत् पुरा ॥

*॥ इति श्रीशिवाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥*

# श्रीदुर्गाष्टोत्तरशतनामस्तोत्रम्

ईश्वर उवाच

शतनाम प्रवक्ष्यामि शृणुष्व कमलानने।
यस्य प्रसादमात्रेण दुर्गा प्रीता भवेत् सती॥
ॐ सती साध्वी भवप्रीता भवानी भवमोचनी।
आर्या दुर्गा जया चाद्या त्रिनेत्रा शूलधारिणी॥
पिनाकधारिणी चित्रा चण्डघण्टा महातपाः।
मनो बुद्धिरहंकारा चित्तरूपा चिता चितिः॥
सर्वमन्त्रमयी सत्ता सत्यानन्दस्वरूपिणी।
अनन्ता भाविनी भाव्या भव्याभव्या सदागतिः॥
शाम्भवी देवमाता च चिन्ता रत्नप्रिया सदा।
सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी॥
अपर्णानेकवर्णा च पाटला पाटलावती।
पट्टाम्बरपरीधाना कलमञ्जीररञ्जिनी॥
अमेयविक्रमा क्रूरा सुन्दरी सुरसुन्दरी।
वनदुर्गा च मातङ्गी मतङ्गमुनिपूजिता॥
ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा।
चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः॥
विमलोत्कर्षिणी ज्ञाना क्रिया नित्या च बुद्धिदा।
बहुला बहुलप्रेमा सर्ववाहनवाहना॥
निशुम्भशुम्भहननी महिषासुरमर्दिनी।
मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी॥
सर्वासुरविनाशा च सर्वदानवघातिनी।

सर्वशास्त्रमयी सत्या सर्वास्त्रधारिणी तथा॥
अनेकशस्त्रहस्ता च अनेकास्त्रस्य धारिणी।
कुमारी चैककन्या च कैशोरी युवती यतिः॥
अप्रौढा चैव प्रौढा च वृद्धमाता बलप्रदा।
महोदरी मुक्तकेशी घोररूपा महाबला॥
अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी।
नारायणी भद्रकाली विष्णुमाया जलोदरी॥
शिवदूती कराली च अनन्ता परमेश्वरी।
कात्यायनी च सावित्री प्रत्यक्षा ब्रह्मवादिनी॥
य इदं प्रपठेन्नित्यं दुर्गानामशताष्टकम्।
नासाध्यं विद्यते देवि त्रिषु लोकेषु पार्वति॥
धनं धान्यं सुतं जायां हयं हस्तिनमेव च।
चतुर्वर्गं तथा चान्ते लभेन्मुक्तिं च शाश्वतीम्॥
कुमारीं पूजयित्वा तु ध्यात्वा देवीं सुरेश्वरीम्।
पूजयेत् परया भक्त्या पठेन्नामशताष्टकम्॥
तस्य सिद्धिर्भवेद् देवि सर्वैः सुरवैररपि।
राजानो दासतां यान्ति राज्यश्रियमवाप्नुयात्॥
गोरोचनालक्तककुङ्कुमेन सिन्दूरकर्पूरमधुत्रयेण।
विलिख्य यन्त्रं विधिना विधिज्ञो भवेत् सदा धारयते पुरारिः॥
भौमावास्यानिशामग्रे चन्द्रे शतभिषां गते।
विलिख्य प्रपठेत् स्तोत्रं स भवेत् सम्पदां पदम्॥

*॥ इति श्रीविश्वसारतन्त्रे श्रीदुर्गाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्॥*

## श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

श्रीकृष्णः कमलानाथो वासुदेवः सनातनः।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः॥
श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः।
चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः॥
देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः।
यमुनावेगसंहारी बलभद्रप्रियानुजः॥
पूतनाजीवितहरः शकटासुरभञ्जनः।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः॥
नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः।
नवनीतनवाहारो मुचुकुन्दप्रसादकः॥
षोडशस्त्रीसहस्रेशस्त्रिभङ्गी मधुराकृतिः।
शुकवागमृताब्धीन्दुर्गोविन्दो योगिनां पतिः॥
वत्सवाटचरोऽनन्तो धेनुकासुरभञ्जनः।
तृणीकृततृणावर्तो यमलार्जुनभञ्जनः॥
उत्तालतालभेत्ता च तमालश्यामलाकृतिः।
गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः॥
इलापतिः परं ज्योतिर्यादवेन्द्रो यदूद्वहः।
वनमाली पीतवासाः पारिजातापहारकः॥

गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः।
अजो निरञ्जनः कामजनकः कञ्जलोचनः॥
मधुहा मधुरानाथो द्वारकानायको बली।
वृन्दावनान्तसंचारी तुलसीदामभूषणः॥
स्यमन्तकमणेर्हर्ता नरनारायणात्मकः।
कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः॥
मुष्टिकासुरचाणूरमल्लयुद्धविशारदः।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः॥
अनादिब्रह्मचारी च कृष्णाव्यसनकर्षकः।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः॥
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः।
सत्यवाक्सत्यसंकल्पः सत्यभामारतो जयी॥
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः।
जगद्गुरुर्जगन्नाथो वेणुनादविशारदः॥
वृषभासुरविध्वंसी बाणासुरकरान्तकः।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः॥
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः।
कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः॥
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशकः।
नारायणः परंब्रह्म पन्नगाशनवाहनः॥
जलक्रीडासमासक्तो गोपीवस्त्रापहारकः।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः॥

सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः।
एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम्॥
कृष्णनामामृतं नाम परमानन्दकारकम्।
अत्युपद्रवदोषघ्नं परमायुष्यवर्धनम्॥

॥ इति श्रीपद्मपुराणे उत्तरखण्डे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्॥

